त्वः ह त्यत्सप्तभ्यो जायमानो ऽशत्रुभ्यो अभवः शत्रुरिंद्र ।
गूढे द्यावापृथिवी अन्वविंदो विभुमद्भ्यो भुवनेभ्यो रणं धाः ॥४॥ 326
मेडिं न त्वा वज्रिणं भृष्टिमंतं पुरुधस्मानं वृषभः स्थिरप्स्नुम् ।
कराष्यर्यस्तरुषीर्दुवस्युरिंद्र द्युक्षं वृत्रहणं गृणीषे ॥५॥ 327
प्र वो महे महेवृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम् ।
विशः पूर्वीः प्र चर चर्षणिप्राः ॥६॥ 328
शुनः हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानि ॥७॥ 329
उदु ब्रह्माण्यैरत श्रवस्येंद्रः समर्ये महया वसिष्ठ ।
आ यो विश्वानि श्रवसा ततानोपश्रोता म ईवतो वचांःसि ॥८॥ 330
चक्रं यदस्याप्स्वा निषत्तमुतो तदस्मै मध्विच्चछद्यात् ।
पृथिव्यामतिषितं यदूधः पयो गोष्वदधा ओषधीषु ॥९॥ 331

॥दशति॥४॥

त्यमू षु वाजिनं देवजूतः सहोवानं तरुतारः रथानाम् ।
अरिष्टनेमिं पृतनाजमाशुः स्वस्तये तार्क्ष्यमिहा हुवेम ॥१॥ 332
त्रातारमिंद्रमवितारमिंद्रः हवेहवे सुहवः शूरमिंद्रम् ।
हुवे नु शक्रं पुरुहूतमिंद्रमिदः हविर्मघवा वेत्विंद्रः ॥२॥ 333

यज्ञामह इंद्रं वज्रदक्षिणं हरीणां रथ्यां३ विव्रतानाम् ।
प्र श्मश्रुभिर्दोधुवदूर्ध्वधा भुवद्वि सेनाभिर्भयमानो वि राधसा ॥ ३ ॥ 334

सत्राहणं दाधृषिं तुम्रमिंद्रं महामपारं वृषभं सुवज्रम् ।
हंता यो वृत्रं सनितोत वाजं दाता मघानि मघवा सुराधाः ॥ ४ ॥ 335

यो नो वनुष्यन्नभिदाति मर्त उगणा वा मन्यमानस्तुरो वा ।
क्षिधी युधा शवसा वा तमिंद्राभी ष्याम वृषमणस्त्वोताः ॥ ५ ॥ 336

यं वृत्रेषु क्षितय स्पर्धमाना यं युक्तेषु तुरयंतो हवंते ।
यं शूरसातौ यमपामुपज्मन्यं विप्रासो वाजयंते स इंद्रः ॥ ६ ॥ 337

इंद्रापर्वता बृहता रथेन वामीरिष आ वहतं सुवीराः ।
वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिडया मदंता ॥ ७ ॥ 338

इंद्राय गिरो अनिशितसर्गा अपः प्रैरयत्सगरस्य बुध्नात् ।
यो अक्षेणेव चक्रियौ शचीभिर्विष्वक्तस्तंभ पृथिवीमुत द्याम् ॥ ८ ॥ 339

आ त्वा सखायः सख्या ववृत्युस्तिरः पुरू चिदर्णवां जगम्याः ।
पितुर्नपातमा दधीत वेधा अस्मिन्क्षये प्रतरां दीद्यानः ॥ ९ ॥ 340

को अद्य युंक्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
आसन्नेषामप्सुवाहो मयोभून्य एषां भृत्यामृणधत्स जीवात् ॥ १० ॥ 341

॥ दशति ॥ ५ ॥

॥ अर्धप्रपाठकः ॥

गायंति त्वा गायत्रिणो ऽ र्चंत्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥ १ ॥ 342

इंद्रं विश्वा अवीवृधंत्समुद्रव्यचसं गिरः ।
रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥ २ ॥ 343

इममिंद्र सुतं पिब ज्येष्ठममर्त्यं मदम् ।
शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने ॥ ३ ॥ 344

यदिंद्र चित्र म इह नास्ति त्वादातमद्रिवः ।
राधस्तन्नो विदद्वस उभयाहस्त्या भर ॥ ४ ॥ 345

श्रुधी हवं तिरश्च्या इंद्र यस्त्वा सपर्यति ।
सुवीर्यस्य गोमतो रायस्पूर्धि महाँ असि ॥ ५ ॥ 346

असावि सोम इंद्र ते शविष्ठ धृष्णवा गहि ।
आ त्वा पृणक्त्विंद्रियं रजः सूर्यो न रश्मिभिः ॥ ६ ॥ 347

एंद्र याहि हरिभिरुप कण्वस्य सुष्टुतिम् ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ७ ॥ 348

आ त्वा गिरो रथीरिवास्थुः सुतेषु गिर्वणः ।
अभि त्वा समनूषत गावो वत्सं न धेनवः ॥ ८ ॥ 349

एतो न्विंद्रं स्तवाम शुद्धं शुद्धेन साम्ना ।
शुद्धैरुक्थैर्वावृध्वांसं शुद्धैराशीर्वान्ममत्तु ॥ ९ ॥ 350

यो रयिं वो रयिंतमो यो द्युम्नैर्द्युम्नवत्तमः ।
सोमः सुतः स इंद्र ते ऽस्ति स्वधापते मदः ॥ १० ॥ 351

॥ दशति ॥ २ ॥

प्रत्यस्मै पिपीषते विश्वानि विदुषे भर ।
अरंगमाय जग्मये ऽपश्चादध्वने नरः ॥ १ ॥ 352
आ नो वयोवयःशयं महांतं गह्वरेष्ठां महांतं पूर्विनेष्ठाम् ।
उग्रं वचो अपावधीः ॥ २ ॥ 353
आ त्वा रथं यथोतये सुम्नाय वर्तयामसि ।
तुविकूर्मिमृतीषहमिंद्रꣳ शविष्ठ सत्पतिम् ॥ ३ ॥ 354
स पूर्व्यो महोनां वेनः क्रतुभिरानजे ।
यस्य द्वारा मनुः पिता देवेषु धिय आनजे ॥ ४ ॥ 355
यदी वहंत्याशवो भ्राजमाना रथेष्वा ।
पिबंतो मदिरं मधु तत्र श्रवाꣳसि कृण्वते ॥ ५ ॥ 356
त्यमु वो अप्रहणं गृणीषे शवसस्पतिम् ।
इंद्रं विश्वासाहं नरꣳ शचिष्ठं विश्ववेदसम् ॥ ६ ॥ 357
दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत्प्र न आयूꣳषि तारिषत् ॥ ७ ॥ 358

पुरां भिंदुर्युवा कविरमितौजा अजायत ।
इंद्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥८॥ 359

॥ दशति ॥२॥

प्रप्र वस्त्रिष्टुभमिषं वंदद्वीरायेंदवे ।
धिया वो मेधसातये पुरंध्या विवासति ॥१॥ 360
कश्यपस्य स्वर्विदो यावाहुः सयुजाविति ।
ययोर्विश्वमपि व्रतं यज्ञं धीरा निचाय्य ॥२॥ 361
अर्चत प्रार्चत नरः प्रियमेधासो अर्चत ।
अर्चंतु पुत्रका उत पुरमिद्धृष्ण्वर्चत ॥३॥ 362
उक्थमिंद्राय शंस्यं वर्धनं पुरुनिःषिधे ।
शक्रो यथा सुतेषु णो रारणत्सख्येषु च ॥४॥ 363
विश्वानरस्य वस्पतिमनानतस्य शवसः ।
एवैश्च चर्षणीनामूती हुवे रथानाम् ॥५॥ 364
स घा यस्ते दिवो नरो धिया मर्तस्य शमतः ।
ऊती स बृहतो दिवो द्विषो अंहो न तरति ॥६॥ 365
विभोष्ट इंद्र राधसो विभ्वी रातिः शतक्रतो ।
अथा नो विश्वचर्षणे द्युम्नं सुदत्र मंहय ॥७॥ 366

वयश्चित्ते पतत्रिणो द्विपाच्चतुष्पादर्जुनि ।
उषः प्रारन्नृतूंरनु दिवो अंतेभ्यस्परि ॥ ८ ॥ 367

अमी ये देवा स्थन मध्य आ रोचने दिवः ।
कद्ध ऋतं कदमृतं का प्रत्ना व आहुतिः ॥ ९ ॥ 368

ऋचं साम यजामहे याभ्यां कर्माणि कृण्वते ।
वि ते सदसि राजतो यज्ञं देवेषु वक्षतः ॥ १० ॥ 369

॥ दशति ॥ ३ ॥

विश्वाः पृतना अभिभूतरं नरः सजूस्ततक्षुरिंद्रं जजनुश्च राजसे ।
क्रत्वे वरे स्थेमन्यामुरीमुतोग्रमोजिष्ठं तरसं तरस्विनम् ॥ १ ॥ 370

श्रत्ते दधामि प्रथमाय मन्यवे ऽहन्यद्दस्युं नर्यं विवेरपः ।
उभे यत्वा रोदसी धावतामनु भ्यसात्ते शुष्मात्पृथिवी चिदद्रिवः ॥ २ ॥ 371

समेत विश्वा ओजसा पतिं दिवो य एक इद्भूरतिथिर्जनानाम् ।
स पूर्व्यो नूतनमाजिगीषं तं वर्तनीरनु वावृत एक इत् ॥ ३ ॥ 372

इमे त इंद्र ते वयं पुरुष्टुत ये त्वारभ्य चरामसि प्रभूवसो ।
न हि त्वदन्यो गिर्वणो गिरः सघत्क्षोणीरिव प्रति तद्धर्य नो वचः ॥ ४ ॥ 373

चर्षणीधृतं मघवानमुक्थ्या३मिंद्रं गिरो बृहतीरभ्यनूषत ।
वावृधानं पुरुहूतं सुवृक्तिभिरमर्त्यं जरमाणं दिवेदिवे ॥ ५ ॥ 374

अच्छा व इंद्रं मतयः स्वर्युवः सध्रीचीर्विश्वा उशतीरनूषत ।
परि ष्वजंत जनयो यथा पतिं मर्यं न शुंध्युं मघवानमूतये ॥६॥ 375

अभि त्यं मेषं पुरुहूतमृग्मियमिंद्रं गीर्भिर्मदता वस्वो अर्णवम् ।
यस्य द्यावो न विचरंति मानुषं भुजे मंहिष्ठमभि विप्रमर्चत ॥७॥ 376

त्यं सु मेषं महया स्वर्विदं शतं यस्य सुभुवः साकमीरते ।
अत्यं न वाजं हवनस्यदं रथमिंद्रं ववृत्यामवसे सुवृक्तिभिः ॥८॥ 377

घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा ।
द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा ॥९॥ 378

उभे यदिंद्र रोदसी आपप्राथोषा इव ।
महांतं त्वा महीनां सम्राजं चर्षणीनाम् ।
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥१०॥ 379

प्र मंदिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना ।
अवस्यवो वृषणं वज्रदक्षिणं मरुत्वंतं सख्याय हुवेमहि ॥११॥ 380

॥ दशतिः ॥४॥

इंद्र सुतेषु सोमेषु क्रतुं पुनीष उक्थ्यम् ।
विदे वृधस्य दक्षस्य महां हि षः ॥१॥ 381

तमु अभि प्र गायत पुरुहूतं पुरुष्टुतम् ।
इंद्रं गीर्भिस्तविषमा विवासत ॥२॥ 382

अभ्रातृव्यो अना त्वमनापिरिंद्र जनुषा सनादसि ।
युधेदापित्वमिछसे ॥ १ ॥ 399

यो न इदमिदं पुरा प्र वस्य आनिनाय तमु व स्तुषे ।
सखाय इंद्रमूतये ॥ २ ॥ 400

आ गंता मा रिषण्यत प्रस्थावानो माप स्थात समन्यवः ।
दृढा चिद्यमयिष्णवः ॥ ३ ॥ 401

आ याह्ययमिंदवे ऽ श्वपते गोपत उर्वरापते ।
सोमꣳ सोमपते पिब ॥ ४ ॥ 402

त्वया ह स्विद्युजा वयं प्रति श्वसंतं वृषभ ब्रुवीमहि ।
सꣳस्थे जनस्य गोमतः ॥ ५ ॥ 403

गावश्चिद्घा समन्यवः सजात्येन मरुतः सबंधवः ।
रिहते ककुभो मिथः ॥ ६ ॥ 404

त्वं न इंद्रा भर ओजो नृम्णꣳ शतक्रतो विचर्षणे ।
आ वीरं पृतनासहम् ॥ ७ ॥ 405

अधा हींद्र गिर्वण उप त्वा काम ईमहे ससृग्महे ।
उदेव ग्मंत उदभिः ॥ ८ ॥ 406

सीदंतस्ते वयो यथा गोश्रीते मधौ मदिरे विवक्षणे ।
अभि त्वामिंद्र नोनुमः ॥ ९ ॥ 407

वयेमु त्वामपूर्व्य स्थूरं न कच्चिद्भरंतोऽवस्यवः ।
वज्रिं चित्रं हवामहे ॥१०॥

॥ दशति ॥ २ ॥

स्वादोरित्था विषूवतो मधोः पिबंति गौर्यः ।
या इंद्रेण सयावरीर्वृष्णा मदंति शोभथा वस्वीरनु स्वराज्यम् ॥१॥ 409
इत्था हि सोम इन्मदो ब्रह्म चकार वर्धनम् ।
शविष्ठ वज्रिन्नोजसा पृथिव्या निः शशा अहिमर्चन्ननु स्वराज्यम् ॥२॥ 410
इंद्रो मदाय वावृधे शवसे वृत्रहा नृभिः ।
तमिन्महत्स्वाजिषूतिमर्भे हवामहे स वाजेषु प्र नोऽविषत् ॥३॥ 411
इंद्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन्वीर्यम् ।
यद्ध त्यं मायिनं मृगं तव त्यन्माययावधीरर्चन्ननु स्वराज्यम् ॥४॥ 412
प्रेह्यभीहि धृष्णुहि न ते वज्रो नि यंसते ।
इंद्र नृम्णं हि ते शवो हनो वृत्रं जया अपोऽर्चन्ननु स्वराज्यम् ॥५॥ 413
यदुदीरत आजयो धृष्णवे धीयते धनम् ।
युंक्ष्वा मदच्युता हरी कं हनः कं वसौ दधोऽस्मां इंद्र वसौ दधः ॥६॥ 414
अक्षन्नमीमदंत ह्यव प्रिया अधूषत ।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विंद्र ते हरी ॥७॥ 415

उपो षु शृणुही गिरो मघवन्मातथा इव ।
कदा नः सूनृतावतः कर इदर्थयास इद्योजा न्विंद्र ते हरी ॥ ८ ॥ 416

चंद्रमा अप्स्वाऽंतरा सुपर्णो धावते दिवि ।
न वो हिरण्यनेमयः पदं विंदंति विद्युतो वित्तं मे अस्य रोदसी ॥ ९ ॥ 417

प्रति प्रियतमꣳ रथं वृषणं वसुवाहनम् ।
स्तोता वामश्विनावृषि स्तोमेभिर्भूषति प्रति माध्वी मम श्रुतꣳ हवम् ॥ १० ॥ 418

॥ दशति ॥ ३ ॥

आ ते अग्न इधीमहि द्युमंतं देवाजरम् ।
यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषꣳ स्तोतृभ्य आ भर ॥ १ ॥ 419

आग्निं न स्ववृक्तिभिर्होतारं त्वा वृणीमहे ।
शीरं पावकशोचिषं वि वो मदे यज्ञेषु स्तीर्णबर्हिषं विवक्षसे ॥ २ ॥ 420

महे नो अद्य बोधयोषो राये दिवित्मती ।
यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ ३ ॥ 421

भद्रं नो अपि वातय मनो दक्षमुत क्रतुम् ।
अथा ते सख्ये अंधसो वि वो मदे रणा गावो न यवसे विवक्षसे ॥ ४ ॥ 422

क्रत्वा महाꣳ अनुष्वधं भीम आ वावृते शवः ।
श्रिय ऋष्व उपाकयोर्नि शिप्री हरिवां दधे हस्तयोर्वज्रमायसम् ॥ ५ ॥ 423

स घा तं वृषणं रथमधि तिष्ठाति गोविदम् ।
यः पात्रं हारियोजनं पूर्णमिंद्र चिकेतति योजा न्विंद्र ते हरी ॥६॥ 424

अग्निं तं मन्ये यो वसुरस्तं यं यंति धेनवः ।
अस्तमर्वंत आशवोऽस्तं नित्यासो वाजिन इषं स्तोतृभ्य आ भर ॥७॥ 425

न तमंहो न दुरितं देवासो अष्ट मर्त्यम् ।
सजोषसो यमर्यमा मित्रो नयति वरुणो अति द्विषः ॥८॥ 426

॥ दशति ॥४॥

परि प्र धन्वेंद्राय सोम स्वादुर्मित्राय पूष्णे भगाय ॥१॥ 427 Rv. 9, 109, 1.

पर्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः ।
द्विषस्तरध्या ऋणया न ईरसे ॥२॥ 428 Rv. 9, 110, 1.

पवस्व सोम महांत्समुद्रः पिता देवानां विश्वाभि धाम ॥३॥ 429

पवस्व सोम महे दक्षायाश्वो न निक्तो वाजी धनाय ॥४॥ 430

इंदुः पविष्ट चारुर्मदायापामुपस्थे कविर्भगाय ॥५॥ 431

अनु हि त्वा सुतं सोम मदामसि महे समर्यराज्ये ।
वाजां अभि पवमान प्र गाहसे ॥६॥ 432

क ईं व्यक्ता नरः सनीडा रुद्रस्य मर्या अथा स्वश्वाः ॥७॥ 433

अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशम् ।

एंद्र याह्युप नः परावतो नायमच्छा विदथानीव सत्पतिरस्ता राजेव सत्पतिः ।

हवामहे त्वा प्रयस्वंतः सुतेष्वा पुत्रासो न पितरं वाजसातये मंहिष्ठं वाजसातये ॥ ३ ॥ 458

तमिंद्रं जोहवीमि मघवानमुग्रं सत्रा दधानमप्रतिष्कुतं श्रवांसि भूरि ।
मंहिष्ठो गीर्भिरा च यज्ञियो ववर्त राये नो विश्वा सुपथा कृणोतु वज्री ॥ ४ ॥ 459

अस्तु श्रौषट् पुरो अग्निं धिया दध आ नु त्यच्छर्धो दिव्यं वृणीमह इंद्रवायू वृणीमहे ।
यद्ध क्राणा विवस्वते नाभा संदाय नव्यसे ।
अध प्र नूनमुप यंति धीतयो देवां अच्छ न धीतयः ॥ ५ ॥ 460

प्र वो महे मतयो यंतु विष्णवे मरुत्वते गिरिजा एवयामरुत् ।
प्र शर्धाय प्र यज्यवे सुखादये तवसे भंददिष्टये धुनिव्रताय शवसे ॥ ६ ॥ 461

अया रुचा हरिण्या पुनानो विश्वा द्वेषांसि तरति सयुग्वभिः सूरो न सयुग्वभिः ।
धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः ।
विश्वा यद्रूपा परियास्यृक्वभिः सप्तास्येभिर्ऋक्वभिः ॥ ७ ॥ 462

अभि त्यं देवं सवितारमोण्योः कविक्रतुमर्चामि सत्यसवं रत्नधाममभि प्रियं मतिम् ।

अधा यस्यामातभा अदिद्युतत्सर्वीमनि हिरण्यपाणिरमिमीत सुक्रतुः
कृपा स्वः ॥८॥ 463

अग्निं होतारं मन्ये दास्वंतं वसोः सूनुं सहसो जातवेदसं विप्रं न
जातवेदसम्।

य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा।

घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः ॥९॥ 464

तव त्यन्नर्यं नृतो ऽप इंद्र प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम्।

यो देवस्य शवसा प्रारिणा असु रिणन्नपः।

भुवो विश्वमभ्यदेवमोजसा विदेदूर्जं शतक्रतुर्विदेदिषम् ॥१०॥ 465

॥ दशति ॥३॥

उच्चा ते जातमंधसो दिवि सद्भूम्या ददे। उग्रं शर्म महि श्रवः ॥१॥ 466

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया। इंद्राय पातवे सुतः ॥२॥ 467

वृषा पवस्व धारया मरुत्वते च मत्सरः। विश्वा दधान ओजसा ॥३॥ 468

यस्ते मदो वरेण्यस्तेना पवस्वांधसा। देवावीरघशंसहा ॥४॥ 469

तिस्रो वाच उदीरते गावो मिमंति धेनवः। हरिरेति कनिक्रदत् ॥५॥ 470

इंद्रायेंदो मरुत्वते पवस्व मधुमत्तमः। अर्कस्य योनिमासदम् ॥६॥ 471

असाव्यंशुर्मदायाप्सु दक्षो गिरिष्ठाः। श्येनो न योनिमासदत् ॥७॥ 472

पवस्व दक्षसाधनो देवेभ्यः पीतये हरे । मरुद्भ्यो वायवे मदः ॥८॥ 473

परि स्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत् । मदेषु सर्वधा असि ॥९॥ 474

परि प्रिया दिवः कविर्वयांसि नप्त्योर्हितः । स्वानैर्याति कविक्रतुः ॥१०॥ 475

॥ दशति ॥४॥

प्र सोमासो मदच्युतः श्रवसे नो मघोनाम् । सुता विदथे अक्रमुः ॥१॥ 476

प्र सोमासो विपश्चितोऽपो नयंत ऊर्मयः । वनानि महिषा इव ॥२॥ 477

पवस्वेंदो वृषा सुतः कृधी नो यशसो जने । विश्वा अप द्विषो जहि ॥३॥ 478

वृषा ह्यसि भानुना द्युमंतं त्वा हवामहे । पवमान स्वर्दृशम् ॥४॥ 479

इंदुः पविष्ट चेतनः प्रियः कवीनां मतिः । सृजदश्वं रथीरिव ॥५॥ 480

असृक्षत प्र वाजिनो गव्या सोमासो अश्वया । शुक्रासो वीरयाशवः ॥६॥ 481

पवस्व देव आयुषगिंद्रं गच्छतु ते मदः । वायुमा रोह धर्मणा ॥७॥ 482

पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम् । ज्योतिर्वैश्वानरं बृहत् ॥८॥ 483

परि स्वानास इंदवो मदाय बर्हणा गिरा । मधो अर्षंति धारया ॥९॥ 484

परि प्रासिष्यदत्कविः सिंधोरूर्मावधि श्रितः । कारुं बिभ्रत्पुरुस्पृहम् ॥१०॥ 485

॥ दशति ॥५॥

॥ इति पञ्चमः प्रपाठकः समाप्तः ॥

उपो षु जातमप्तुरं गोभिर्भंगं परिष्कृतम् । इंदुं देवा अयासिषुः ॥ १॥ 486

पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः । शुंभंति विप्रं धीतिभिः ॥ २॥ 487

आविशन्कलशꣳ सुतो विश्वा अर्षन्नभि श्रियः । इंदुरिंद्राय धीयते ॥ ३॥ 488

असर्जि रथ्यो यथा पवित्रे चम्वोः सुतः । कार्ष्मन्वाजी न्यक्रमीत् ॥ ४॥ 489

प्र यद्गावो न भूर्णयस्त्वेषा अयासो अक्रमुः । घ्नंतः कृष्णामप त्वचम् ॥ ५॥ 490

अपघ्नन्पवसे मृधः क्रतुवित्सोम मत्सरः । नुदस्वादेवयुं जनम् ॥ ६॥ 491

अया पवस्व धारया यया सूर्यमरोचयः । हिन्वानो मानुषीरपः ॥ ७॥ 492

स पवस्व य आविथेंद्रं वृत्राय हंतवे । वव्रिवाꣳसं महीरपः ॥ ८॥ 493

अया वीती परि स्रव यस्त इंदो मदेष्वा । अवाहन्नवतीर्नव ॥ ९॥ 494

परि द्युक्षꣳ सनद्रयिं भरद्वाजं नो अंधसा । स्वानो अर्ष पवित्र आ ॥ १०॥ 495

॥ दशति ॥ १॥

अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः । सꣳ सूर्येण दिद्युते ॥ १॥ 496

आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे । पांतमा पुरुस्पृहम् ॥ २॥ 497

अध्वर्यो अद्रिभिः सुतꣳ सोमं पवित्र आ नय । पुनाहींद्राय पातवे ॥ ३॥ 498

तरत्स मंदी धावति धारा सुतस्यांधसः । तरत्स मंदी धावति ॥ ४॥ 499

आ पवस्व सहस्रिणꣳ रयिꣳ सोम सुवीर्यम् । अस्मे श्रवाꣳसि धारय ॥ ५॥ 500

अनु प्रत्नास आयवः पदं नवीयो अक्रमुः । रुचे जनंत सूर्यम् ॥ ६॥ 501

अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत् । सीदन्योनौ वनेष्वा ॥ ७ ॥ 502

वृषा सोम द्युमाꣳ असि वृषा देव वृषव्रतः । वृषा धर्माणि दध्रिषे ॥ ८ ॥ 503

इषे पवस्व धारया मृज्यमानो मनीषिभिः । इंदो रुचाभि गा इहि ॥ ९ ॥ 504

मंद्रया सोम धारया वृषा पवस्व देवयुः । अव्या वारेभिरस्मयुः ॥ १० ॥ 505

अया सोम सुकृत्यया महांत्सन्नभ्यवर्धथाः । मंदान इद्वृषायसे ॥ ११ ॥ 506

अयं विचर्षणिर्हितः पवमानः स चेतति । हिन्वान आप्यं बृहत् ॥ १२ ॥ 507

प्र न इंदो महे तु न ऊर्मिं न बिभ्रदर्षसि । अभि देवाꣳ अयास्यः ॥ १३ ॥ 508

अपघ्नन्पवते मृधोऽप सोमो अराव्णः । गच्छन्निंद्रस्य निष्कृतम् ॥ १४ ॥ 509

॥ दशति ॥ २ ॥

पुनानः सोम धारयापो वसानो अर्षसि ।
आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥ १ ॥ 510

परीतो षिंचता सुतꣳ सोमो य उत्तमꣳ हविः ।
दधन्वाꣳ यो नर्यो अप्स्वा३ंतरा सुषाव सोममद्रिभिः ॥ २ ॥ 511

आ सोम स्वानो अद्रिभिस्तिरो वाराण्यव्यया ।
जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दध्रिषे ॥ ३ ॥ 512

प्र सोम देववीतये सिंधुर्न पिप्ये अर्णसा ।
अꣳशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम् ॥ ४ ॥ 513

सोमो उ षुवाणः सोतृभिरधि ष्णुभिरवीनाम् ।
अश्वयेव हरिता याति धारया मंद्रया याति धारया ॥५॥ 514

तवाहं सोम रारण सख्य इंदो दिवेदिवे ।
पुरूणि बभ्रो नि चरंति मामव परिधीꣳरति ताꣳ इहि ॥६॥ 515

मृज्यमानः सुहस्त्या समुद्रे वाचमिन्वसि ।
रयिं पिशंगं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥७॥ 516

अभि सोमास आयवः पवंते मद्यं मदम् ।
समुद्रस्याधि विष्टपे मनीषिणो मत्सरासो मदच्युतः ॥८॥ 517

पुनानः सोम जागृविरव्या वारैः परि प्रियः ।
त्वं विप्रो अभवोऽंगिरस्तम मध्वा यज्ञं मिमिक्ष णः ॥९॥ 518

इंद्राय पवते मदः सोमो मरुत्वते सुतः ।
सहस्रधारो अत्यव्यमर्षति तमी मृजंत्यायवः ॥१०॥ 519

पवस्व वाजसातमोऽभि विश्वानि वार्या ।
त्वꣳ समुद्रः प्रथमे विधर्म देवेभ्यः सोम मत्सरः ॥११॥ 520

पवमाना असृक्षत पवित्रमति धारया ।
मरुत्वंतो मत्सरा इंद्रिया हया मेधामभि प्रयाꣳसि च ॥१२॥ 521

॥ दशति ॥३॥

इंदुर्वाजी पवते गोन्योघा इंद्रे सोमः सह इन्वन्मदाय।
हंति रक्षो बाधते पर्यरातिं वरिवस्कृण्वन्वृजनस्य राजा ॥ ८ ॥ 539

अया पवा पवस्वैना वसूनि मांश्चत्व इंदो सरसि प्र धन्व।
ब्रध्नश्चिद्यस्य वातो न जूतिं पुरुमेधाश्चित्तकवे नरं धात् ॥ ९ ॥ 540

महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान्।
अदधादिंद्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिंदुः ॥ १० ॥ 541

असर्जि वक्वा रथ्ये यथाजौ धिया मनोता प्रथमा मनीषा।
दश स्वसारो अधि सानो अव्ये मृजंति वह्निं सदनेष्वच्छ ॥ ११ ॥ 542

अपामिवेदूर्मयस्तर्तुराणाः प्र मनीषा ईरते सोममच्छ।
नमस्यंतीरुप च यंति सं चाच विशंत्युशतीरुशंतम् ॥ १२ ॥ 543

॥ दशति ॥ ५ ॥

॥ अर्धप्रपाठकः ॥

पुरोजिती वो अंधसः सुताय मादयित्नवे।
अप श्वानं श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥ १ ॥ 544

अयं पूषा रयिर्भगः सोमः पुनानो अर्षति।
पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥ २ ॥ 545

सुतासो मधुमत्तमाः सोमा इंद्राय मंदिनः।
पवित्रवंतो अक्षरं देवान्गच्छंतु वो मदाः ॥ ३ ॥ 546

सोमाः पवंत इंदवोऽस्मभ्यं गातुवित्तमाः ।
मित्राः स्वाना अरेपसः स्वाध्यः स्वर्विदः ॥ ४ ॥ 547

अभी नो वाजसातमं रयिमर्ष शतस्पृहम् ।
इंदो सहस्रभर्णसं तुविद्युम्नं विभासहम् ॥ ५ ॥ 548

अभी नवंते अद्रुहः प्रियमिंद्रस्य काम्यम् ।
वत्सं न पूर्व आयुनि जातं रिहंति मातरः ॥ ६ ॥ 549

आ हर्यताय धृष्णवे धनुष्टन्वंति पौंस्यम् ।
शुक्रा वि यंत्यसुराय निर्णिजे विपामग्रे महीयुवः ॥ ७ ॥ 550

परि त्यं हर्यतं हरिं बभ्रुं पुनंति वारेण ।
यो देवान्विश्वां इत्परि मदेन सह गछति ॥ ८ ॥ 551

प्र सुन्वानायांधसो मर्तो न वष्ट तद्वचः ।
अप श्वानमराधसं हता मखं न भृगवः ॥ ९ ॥ 552

॥ दशति ॥ १ ॥

अभि प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु वर्धते ।
आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वंचमरुहद्विचक्षणः ॥ १ ॥ 553

अचोदसो नो धन्वंत्विंदवः प्र स्वानासो बृहद्देवेषु हरयः ।
वि चिदश्नाना इषयो अरातयोऽर्यो नः संतु सनिषंतु नो धियः ॥ २ ॥ 554

एष प्र कोशे मधुमाꣳ अचिक्रददिंद्रस्य वज्रो वपुषो वपुष्टमः ।
अभ्यृ३तस्य सुदुघा घृतश्चुतो वाश्रा अर्षंति पयसा च धेनवः ॥ ३ ॥ 555

प्रो अयासीदिंदुरिंद्रस्य निष्कृतꣳ सखा सख्युर्न प्र मिनाति संगिरम् ।
मर्य इव युवतिभिः समर्षति सोमः कलशे शतयामना पथा ॥ ४ ॥ 556

धर्ता दिवः पवते कृत्व्यो रसो दक्षो देवानामनुमाद्यो नृभिः ।
हरिः सृजानो अत्यो न सत्वभिर्वृथा पाजाꣳसि कृणुषे नदीष्वा ॥ ५ ॥ 557

वृषा मतीनां पवते विचक्षणः सोमो अह्नां प्रतरीतोषसां दिवः ।
प्राणा सिंधूनां कलशाꣳ अचिक्रददिंद्रस्य हार्द्याविशन्मनीषिभिः ॥ ६ ॥ 558

त्रिरस्मै सप्त धेनवो दुदुह्रिरे सत्यामाशिरं परमे व्योमनि ।
चत्वार्यन्या भुवनानि निर्णिजे चारूणि चक्रे यदृतैरवर्धत ॥ ७ ॥ 559

इंद्राय सोम सुषुतः परि स्रवापामीवा भवतु रक्षसा सह ।
मा ते रसस्य मत्सत द्वयाविनो द्रविणस्वंत इह संत्विंदवः ॥ ८ ॥ 560

असावि सोमो अरुषो वृषा हरी राजेव दस्मो अभि गा अचिक्रदत् ।
पुनानो वारमत्येष्यव्ययꣳ श्येनो न योनिं घृतवंतमासदत् ॥ ९ ॥ 561

प्र देवमच्छा मधुमंत इंदवो ऽसिष्यदंत गाव आ न धेनवः ।
बर्हिषदो वचनावंत ऊधभिः परिस्रुतमुस्रिया निर्णिजं धिरे ॥ १० ॥ 562

अंजते व्यंजते समंजते क्रतुꣳ रिहंति मध्वाभ्यंजते ।
सिंधोरुच्छ्वासे पतयंतमुक्षणꣳ हिरण्यपावाः पशुमप्सु गृभ्णते ॥ ११ ॥ 563

पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहंतः सं तदाशत ॥१२॥ 564

॥ दशति ॥२॥

इंद्रमच्छ सुता इमे वृषणं यंतु हरयः ।
श्रुष्टे जातास इंदवः स्वर्विदः ॥१॥ 565
प्र धन्वा सोम जागृविरिंद्रायेंदो परि स्रव ।
द्युमंतं शुष्ममा भर स्वर्विदम् ॥२॥ 566
सखाय आ नि षीदत पुनानाय प्र गायत ।
शिशुं न यज्ञैः परि भूषत श्रिये ॥३॥ 567
तं वः सखायो मदाय पुनानमभि गायत ।
शिशुं न हव्यैः स्वदयंत गूर्तिभिः ॥४॥ 568
प्राणा शिशुर्महीनां हिन्वन्नृतस्य दीधितिम् ।
विश्वा परि प्रिया भुवदध द्विता ॥५॥ 569
पवस्व देववीतय इंदो धाराभिरोजसा ।
आ कलशं मधुमांत्सोम नः सदः ॥६॥ 570
सोमः पुनान ऊर्मिणाव्यं वारं वि धावति ।
अग्रे वाचः पवमानः कनिक्रदत् ॥७॥ 571

प्र पुनानाय वेधसे सोमाय वच उच्यते ।
भृतिं न भरा मतिभिर्जुजोषते ॥ ८ ॥ 572

गोमन्न इंदो अश्ववत्सुतः सुदक्ष धनिव ।
शुचिं च वर्णमधि गोषु धारय ॥ ९ ॥ 573

अस्मभ्यं त्वा वसुविदमभि वाणीरनूषत ।
गोभिष्टे वर्णमभि वासयामसि ॥ १० ॥ 574

पवते हर्यतो हरिरति ह्वरांसि रंह्या ।
अभ्यर्ष स्तोतृभ्यो वीरवद्यशः ॥ ११ ॥ 575

परि कोशं मधुश्चुतं सोमः पुनानो अर्षति ।
अभि वाणीर्ऋषीणां सप्ता नूषत ॥ १२ ॥ 576

॥ दशति ॥ ३ ॥

पवस्व मधुमत्तम इंद्राय सोम क्रतुवित्तमो मदः
महि द्युक्षतमो मदः ॥ १ ॥ 577

अभि द्युम्नं बृहद्यश इषस्पते दिदीहि देव देवयुम् ।
वि कोशं मध्यमं युव ॥ २ ॥ 578

आ सोता परि षिंचताश्वं न स्तोममप्तुरं रजस्तुरम् ।
वनप्रक्षमुदप्रुतम् ॥ ३ ॥ 579

एतमु त्यं मदच्युतं सहस्रधारं वृषभं दिवोदुहम्।
विश्वा वसूनि बिभ्रतम् ॥४॥ 580

स सुन्वे यो वसूनां यो रायामानेता य इडानाम्।
सोमो यः सुक्षितीनाम् ॥५॥ 581

त्वं ह्या३ङ्ग दैव्य पवमान जनिमानि द्युमत्तमः।
अमृतत्वाय घोषयन् ॥६॥ 582

एष स्य धारया सुतोऽव्या वारेभिः पवते मदिन्तमः।
क्रीडन्नूर्मिरपामिव ॥७॥ 583

य उस्रिया अपि या अन्तरश्मनि निर्गा अकृन्तदोजसा।
अभि व्रजं तत्निषे गव्यमश्व्यं वर्मीव धृष्णवा रुज।
ओ३म् वर्मीव धृष्णवा रुज ॥८॥ 584

॥ दशति ॥४॥

॥ इति षष्ठः प्रपाठकः समाप्तः ॥

॥ इति पूर्वार्चिकः समाप्तम् ॥

अथ सामवेदोत्तरार्चिके प्रथमः प्रपाठकः

ओम् ॥ नमः सामवेदाय ॥ श्रीगणेशाय नमः ॥ ओम् ॥

उपास्मै गायता नरः पवमानायेंदवे। अभि देवाः इयक्षते ॥१॥ 1

अभि ते मधुना पयो ऽथर्वाणो अशिश्रयुः। देवं देवाय देवयु ॥२॥ 2

स नः पवस्व शं गवे शं जनाय शमर्वते। शः राजन्नोषधीभ्यः ॥३।१॥ 3

दविद्युतत्या रुचा परिष्टोभंत्या कृपा। सोमाः शुक्रा गवाशिरः ॥१॥ 4

हिन्वानो हेतृभिर्हित आ वाजं वाज्यक्रमीत्। सीदंतो वनुषो यथा ॥२॥ 5

ऋधक्सोम स्वस्तये संजग्मानो दिवा कवे। पवस्व सूर्यो दृशे ॥३।२॥ 6

पवमानस्य ते कवे वाजिंत्सर्गा असृक्षत। अर्वंतो न श्रवस्यवः ॥१॥ 7

अच्छा कोशं मधुश्चुतमसृग्रं वारे अव्यये। अवावशंत धीतयः ॥२॥ 8

अच्छा समुद्रमिंदवो ऽस्तं गावो न धेनवः। अग्मन्नृतस्य योनिमा ॥३।३॥ 9

अग्न आ याहि वीतये गृणानो हव्यदातये। नि होता सत्सि बर्हिषि ॥१॥ 10

तं त्वा समिद्भिरंगिरो घृतेन वर्धयामसि। बृहच्छोचा यविष्ठ्य ॥२॥ 11

स नः पृथु श्रवाय्यमच्छा देव विवाससि। बृहदग्ने सुवीर्यम् ॥३।४॥ 12

आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्। मधा रजाꣳसि सुक्रतू ॥१॥ 13

उरुशꣳसा नमोवृधा मह्ना दक्षस्य राजथः। द्राघिष्ठाभिः शुचिव्रता ॥२॥ 14

गृणाना जमदग्निना योनावृतस्य सीदतम्। पातं सोममृतावृधा ॥ ३ ।५॥ 15
आ याहि सुषुमा हि त इंद्र सोमं पिबा इमम्। एदं बर्हिः सदो मम ॥ १ ॥ 16
आ त्वा ब्रह्मयुजा हरी वहतामिंद्र केशिना। उप ब्रह्माणि नः शृणु ॥ २ ॥ 17
ब्रह्माणस्त्वा युजा वयं सोमपामिंद्र सोमिनः। सुतावंतो हवामहे ॥ ३ ।६॥ 18
इंद्राग्नी आ गतं सुतं गीर्भिर्नभो वरेण्यम्। अस्य पातं धियेषिता ॥ १ ॥ 19
इंद्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः। अया पातमिमं सुतम् ॥ २ ॥ 20
इंद्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे। ता सोमस्येह तृंपताम् ॥ ३ ।७॥ 21
उच्चा ते जातमंधसो दिवि सद्भूम्या ददे। उग्रं शर्म महि श्रवः ॥ १ ॥ 22
स न इंद्राय यज्यवे वरुणाय मरुद्भ्यः। वरिवोवित्परि स्रव ॥ २ ॥ 23
एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम्। सिषासंतो वनामहे ॥ ३ ।८॥ 24
पुनानः सोम धारयापो वसानो अर्षसि।
आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥ १ ॥ 25
दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नं सधस्थमासदत्।
आपृच्छ्यं धरुणं वाज्यर्षसि नृभिर्धौतो विचक्षणः ॥ २ । ९ ॥ 26
प्र तु द्रव परि कोशं नि षीद नृभिः पुनानो अभि वाजमर्ष।
अश्वं न त्वा वाजिनं मर्जयंतो ऽ च्छा बर्ही रशनाभिर्नयंति ॥ १ ॥ 27
स्वायुधः पवते देव इंदुरशस्तिहा वृजना रक्षमाणः।
पिता देवानां जनिता सुदक्षो विष्टंभो दिवो धरुणः पृथिव्याः ॥ २ ॥ 28

ऋषिर्विप्रः पुरएता जनानामृभुर्धीर उशना काव्येन ।
स चिद्विवेद निहितं यदासामपीच्याꣳ गुह्यं नाम गोनाम् ॥ ३ । १० ॥ 29

अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिंद्र तस्थुषः ॥ १ ॥ 30

न त्वावाꣳ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायंतो मघवन्निंद्र वाजिनो गव्यंतस्त्वा हवामहे ॥ २ । ११ ॥ 31

कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥ १ ॥ 32

कस्त्वा सत्यो मदानां मꣳहिष्ठो मत्सदंधसः । दृढा चिदारुजे वसु ॥ २ ॥ 33

अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतये ॥ ३ । १२ ॥ 34

तं वो दस्ममृतीषहं वसोर्मंदानमंधसः ।
अभि वत्सं न स्वसरेषु धेनव इंद्रं गीर्भिर्नवामहे ॥ १ ॥ 35

द्युक्षꣳ सुदानुं तविषीभिरावृतं गिरिं न पुरुभोजसम् ।
क्षुमंतं वाजꣳ शतिनꣳ सहस्रिणं मक्षू गोमंतमीमहे ॥ २ । १३ ॥ 36

तरोभिर्वो विदद्वसुमिंद्रꣳ सबाध ऊतये ।
बृहद्गायंतः सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥ १ ॥ 37

न यं दुध्रा वरंते न स्थिरा मुरो मदेषु शिप्रमंधसः ।
य आदृत्या शशमानाय सुन्वते दाता जरित्र उक्थ्यम् ॥ २ । १४ ॥ 38

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इंद्राय पातवे सुतः ॥ १ ॥ 39

रक्षोहा विश्वचर्षणिरभि योनिमयोहते । द्रोणे सधस्थमासदत् ॥ २ ॥

वरिवोधातमो भुवो मंहिष्ठो वृत्रहंतमः । पर्षि राधो मघोनाम् ॥ ३ । १५ ॥

पवस्व मधुमत्तम इंद्राय सोम क्रतुवित्तमो मदः । महि द्युक्षतमो मदः ॥ १ ॥

यस्य ते पीत्वा वृषभो वृषायतेऽस्य पीत्वा स्वर्विदः ।

स सुप्रकेतो अभ्यक्रमीदिषोऽच्छा वाजं नैतशः ॥ २ । १६ ॥

इंद्रमच्छ सुता इमे वृषणं यंतु हरयः ।

श्रुष्टे जातास इंदवः स्वर्विदः ॥ १ ॥

अयं भराय सानसिरिंद्राय पवते सुतः ।

सोमो जैत्रस्य चेतति यथा विदे ॥ २ ॥

अस्येदिंद्रो मदेष्वा ग्राभं गृभ्णाति सानसिम् ।

वज्रं च वृषणं भरत्समप्सुजित् ॥ ३ । १७ ॥

पुरोजिती वो अंधसः सुताय मादयित्नवे ।

अप श्वानं श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥ १ ॥

यो धारया पावकया परिप्रस्यंदते सुतः । इंदुरश्वो न कृत्व्यः ॥ २ ॥

तं दुरोषमभी नरः सोमं विश्वाच्या धिया । यज्ञाय संत्वद्रयः ॥ ३ । १८ ॥

अभि प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु वर्धते ।

आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वंचमरुहद्विचक्षणः ॥ १ ॥

ऋतस्य जिह्वा पवते मधु प्रियं वक्ता पतिर्धियो अस्या अदाभ्यः ।

दधाति पुत्रः पित्रोरपीच्याꣳनाम तृतीयमधि रोचनं दिवः ॥ २ ॥ 51

अव द्युतानः कलशाꣳ अचिक्रदन्नृभिर्येमाणः कोश आ हिरण्यये ।
अभी ऋतस्य दोहना अनूषताधि त्रिपृष्ठ उषसो वि राजसि ॥ ३ । १९ ॥ 52

यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे ।
प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शꣳसिषम् ॥ १ ॥ 53

ऊर्जो नपातꣳ स हिनायमस्मयुर्दाशेम हव्यदातये ।
भुवद्वाजेष्वविता भुवद्वृध उत त्राता तनूनाम् ॥ २ । २० ॥ 54

एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः । एभिर्वर्धास इंदुभिः ॥ १ ॥ 55

यत्र क्व च ते मनो दक्षं दधस उत्तरम् । तत्र योनिं कृणवसे ॥ २ ॥ 56

न हि ते पूर्तमक्षिपद्भुवन्नेमानां पते । अथा दुवो वनवसे ॥ ३ । २१ ॥ 57

वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरंतोऽवस्यवः । वज्रिं चित्रꣳ हवामहे ॥ १ ॥ 58

उप त्वा कर्मन्नूतये स नो युवोग्रश्चक्राम यो धृषत् ।
त्वामिध्यवितारं ववृमहे सखाय इंद्र सानसिम् ॥ २ । २२ ॥ 59

अधा हीन्द्र गिर्वण उप त्वा काम ईमहे ससृग्महे ।
उदेव ग्मंत उदभिः ॥ १ ॥ 60

वार्ण त्वा यव्याभिर्वर्धंति शूर ब्रह्माणि ।
वावृधाꣳसं चिदद्रिवो दिवेदिवे ॥ २ ॥ 61

युंजंति हरी इषिरस्य गाथयोरौ रथ उरुयुगे वचोयुजा ।

इंद्रवाहा स्वर्विदा ॥३।२३॥

॥ इति अर्धप्रपाठकः ॥

पांतमा वो अंधस इंद्रमभि प्र गायत ।
विश्वासाहꣳ शतक्रतुं मꣳहिष्ठं चर्षणीनाम् ॥१॥
पुरुहूतं पुरुष्टुतं गाथान्या३ꣳ सनश्रुतम् । इंद्र इति ब्रवीतन ॥२॥
इंद्र इन्नो महोनां दाता वाजानां नृतुः । महाꣳ अभिज्ञ्वा यमत् ॥३।१॥
प्र व इंद्राय मादनꣳ हर्यश्वाय गायत । सखायः सोमपाव्ने ॥१॥
शꣳसेदुक्थꣳ सुदानव उत द्युक्षं यथा नरः । चकृमा सत्यराधसे ॥२॥
त्वं न इंद्र वाजयुस्त्वं गव्युः शतक्रतो । त्वꣳ हिरण्ययुर्वसो ॥३।२॥
वयमु त्वा तदिदर्था इंद्र त्वायंतः सखायः । कण्वा उक्थेभिर्जरंते ॥१॥
न घेमन्यदा पपन वज्रिन्नपसो नविष्टौ । तवेदु स्तोमैश्चिकेत ॥२॥
इच्छंति देवाः सुन्वंतं न स्वप्नाय स्पृहयंति । यंति प्रमादमतंद्राः ॥३।३॥
इंद्राय मद्वने सुतं परि ष्टोभंतु नो गिरः । अर्कमर्चंतु कारवः ॥१॥
यस्मिन्विश्वा अधि श्रियो रणंति सप्त सꣳसदः । इंद्रꣳ सुते हवामहे ॥२॥
त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत । तमिद्वर्धंतु नो गिरः ॥३।४॥
अयं त इंद्र सोमो निपूतो अधि बर्हिषि । एहीमस्य द्रवा पिब ॥१॥
शाचिगो शाचिपूजनायꣳ रणाय ते सुतः । आखंडल प्र हूयसे ॥२॥

यस्ते शृंगवृषो णपात्प्रणपात्कुंडपाय्यः। न्यस्मिं दध्र आ मनः ॥३।५॥ 77

आ तू न इंद्र क्षुमंतं चित्रं ग्राभꣳ सं गृभाय। महाहस्ती दक्षिणेन ॥१॥ 78

विद्मा हि त्वा तुविकूर्मिं तुविदेष्णं तुवीमघम्। तुविमात्रमवोभिः ॥२॥ 79

न हि त्वा शूर देवा न मर्तासो दित्संतम्। भीमं न गां वारयंते ॥३।६॥ 80

अभि त्वा वृषभा सुते सुतꣳ सृजामि पीतये। तृंपा व्यश्नुही मदम् ॥१॥ 81

मा त्वा मूरा अविष्यवो मोपहस्वान आ दभन्। मा कीं ब्रह्मद्विषं वनः ॥२॥ 82

इह त्वा गोपरीणसं महे मंदंतु राधसे। सरो गौरो यथा पिब ॥३।७॥ 83

इदं वसो सुतमंधः पिबा सुपूर्णमुदरम्। अनाभयिन्ररिमा ते ॥१॥ 84

नृभिर्धौतः सुतो अश्नैरव्या वारैः परिपूतः। अश्वो न निक्तो नदीषु ॥२॥ 85

तं ते यवं यथा गोभिः स्वादुमकर्म श्रीणंतः। इंद्र त्वास्मिंत्सधमादे ॥३।८॥ 86

इंद्रꣳ ह्यन्वोजसा सुतꣳ राधानां पते। पिबा त्वा३स्य गिर्वणः ॥१॥ 87

यस्ते अनु स्वधामसत्सुते नि यच्छ तन्वम्। स त्वा ममत्तु सोम्य ॥२॥ 88

प्र ते अश्नोतु कुक्ष्योः प्रेंद्र ब्रह्मणा शिरः। प्र बाहू शूर राधसा ॥३।९॥ 89

आ त्वेता नि षीदतेंद्रमभि प्र गायत। सखाय स्तोमवाहसः ॥१॥ 90

पुरूतमं पुरूणामीशानं वार्याणाम्। इंद्रꣳ सोमे सचा सुते ॥२॥ 91

स घा नो योग आ भुवत्स राये स पुरंध्या। गमद्वाजेभिरा स नः ॥३।१०॥ 92

योगेयोगे तवस्तरं वाजेवाजे हवामहे। सखाय इंद्रमूतये ॥१॥ 93

अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरम्। यं ते पूर्वं पिता हुवे ॥२॥ 94

आ घा गमद्यदि श्रवत्सहस्रिणीभिरूतिभिः । वाजेभिरुप नो हवम् ॥३।११॥ 95

इंद्र सुतेषु सोमेषु क्रतुं पुनीष उक्थ्यम् ।
विदे वृधस्य दक्षस्य महाꣳ हि षः ॥१॥ 96

स प्रथमे व्योमनि देवानाꣳ सदने वृधः ।
सुपारः सुश्रवस्तमः समप्सुजित् ॥२॥ 97

तमु हुवे वाजसातय इंद्रं भराय शुष्मिणम् ।
भवा नः सुम्ने अंतमः सखा वृधे ॥३।१२॥ 98

एना वो अग्निं नमसोर्जो नपातमा हुवे ।
प्रियं चेतिष्ठमरतिꣳ स्वध्वरं विश्वस्य दूतममृतम् ॥१॥

स योजते अरुषा विश्वभोजसा स दुद्रवत्स्वाहुतः ।
सुब्रह्मा यज्ञः सुशमी वसूनां देवꣳ राधो जनानाम् ॥२।१३॥ 100

प्रत्यु अदर्श्यायत्यू३च्छंती दुहिता दिवः ।
अपो मही वृणुते चक्षुषा तमो ज्योतिष्कृणोति सूनरी ॥१॥ 101

उदुस्रियाः सृजते सूर्यः सचा उद्यन्नक्षत्रमर्चिवत् ।
तवेदुषो व्युषि सूर्यस्य च सं भक्तेन गमेमहि ॥२।१४॥ 102

इमा उ वां दिविष्टय उस्रा हवंते अश्विना ।
अयं वामह्वे ऽवसे शचीवसू विशंविशꣳ हि गच्छथः ॥१॥ 103

युवं चित्रं ददथुर्भोजनं नरा चोदेथाꣳ सूनृतावते ।

99 Atirātra (handwritten marginal notes, partly cut off)

अर्वाग्रथं समनसा नि यच्छतं पिबतं सोम्यं मधु ॥ २ । १५ ॥ /104

अस्य प्रत्नामनु द्युतं शुक्रं दुदुह्रे अह्रयः । पयः सहस्रसामृषिम् ॥ १ ॥ /105

अयं सूर्य इवोपदृगयं सरांसि धावति । सप्त प्रवत आ दिवम् ॥ २ ॥ /106

अयं विश्वानि तिष्ठति पुनानो भुवनोपरि । सोमो देवो न सूर्यः ॥ ३ । १६ ॥ /107

एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः । हरिः पवित्रे अर्षति ॥ १ ॥ /108

एष प्रत्नेन मन्मना देवो देवेभ्यस्परि । कविर्विप्रेण वावृधे ॥ २ ॥ /109

दुहानः प्रत्नमित्पयः पवित्रे परि षिच्यसे । क्रंदं देवां अजीजनः ॥ ३ । १७ ॥ /110

उप शिक्षापतस्थुषो भियसमा धेहि शत्रवे । पवमान विदा रयिम् ॥ १ ॥ /111

उपो षु जातमप्तुरं० ॥ २ ॥ /112

उपास्मै गायता नरः० ॥ ३ । १८ ॥ /113

प्र सोमासो विपश्चितोऽपो नयंत ऊर्मयः । वनानि महिषा इव ॥ १ ॥ /114

अभि द्रोणानि बभ्रवः शुक्रा ऋतस्य धारया । वाजं गोमंतमक्षरन् ॥ २ ॥ /115

सुता इंद्राय वायवे वरुणाय मरुद्भ्यः । सोमा अर्षंतु विष्णवे ॥ ३ । १९ ॥ /116

प्र सोम देववीतये सिंधुर्न पिप्ये अर्णसा ।

अंशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम् ॥ १ ॥ /117

आ हर्यतो अर्जुनो अत्के अव्यत प्रियः सूनुर्न मर्ज्यः ।

तमीं हिन्वंत्यपसो यथा रथं नदीष्वा गभस्त्योः ॥ २ । २० ॥ /118

प्र सोमासो मदच्युतः श्रवसे नो मघोनाम् । सुता विदथे अक्रमुः ॥ १ ॥ /119

आदीं हंसो यथा गणं विश्वस्यावीवशन्मतिम्। अत्यो न गोभिरज्यते॥२॥ /120

आदीं त्रितस्य योषणो हरिं हिन्वंत्यद्रिभिः। इंदुमिंद्राय पीतये॥३।२१॥ /121

अया पवस्व देवयु रेभन्पवित्रं पर्येषि विश्वतः।
मधोर्धारा असृक्षत ॥ १ ॥ /122

पवते हर्यतो हरिः० ॥ २ ॥ /123

प्र सुन्वानायांधसः० ॥ ३ । २२ ॥ /124

॥ इति प्रथमः प्रपाठकः ॥

पवस्व वाचो अग्रियः सोम चित्राभिरूतिभिः। अभि विश्वानि काव्या ॥ १ ॥ /125

त्वं समुद्रिया अपोऽग्रियो वाच ईरयन्। पवस्व विश्वचर्षणे ॥ २ ॥ /126

तुभ्येमा भुवना कवे महिम्ने सोम तस्थिरे। तुभ्यं धावंति धेनवः॥३।१॥ /127

पवस्वेंदो वृषा सुतः कृधी नो यशसो जने। विश्वा अप द्विषो जहि॥१॥ /128

यस्य ते सख्ये वयं सासह्याम पृतन्यतः। तवेंदो द्युम्न उत्तमे ॥२॥ /129

या ते भीमान्यायुधा तिग्मानि संति धूर्वणे। रक्षा समस्य नो निदः॥३।२॥ /130

वृषा सोम द्युमाँ असि वृषा देव वृषव्रतः। वृषा धर्माणि दध्रिषे ॥१॥ /131

वृष्णस्ते वृष्ण्यं शवो वृषा वनं वृषा सुतः। स त्वं वृषन्वृषेदसि ॥२॥ /132

अश्वो न चक्रदो वृषा सं गा इंदो समर्वतः। वि नो राये दुरो वृधि॥३।३॥ /133

वृषा ह्यसि भानुना द्युमंतं त्वा हवामहे। पवमान स्वर्दृशम् ॥१॥ /134

Bak[h] pa[rt] of U[?]

यदद्भिः परिषिच्यसे मर्मृज्यमान आयुभिः । द्रोणे सधस्थमश्नुषे ॥ २ ॥ 135

आ पवस्व सुवीर्यं मंदमानः स्वायुध । इहो ष्विंदवा गहि ॥ ३ । ४ ॥ 136

पवमानस्य ते वयं पवित्रमभ्युंदतः । सखित्वमा वृणीमहे ॥ १ ॥ 137

ये ते पवित्रमूर्मयो ऽभिक्षरंति धारया । तेभिर्नः सोम मृडय ॥ २ ॥ 138

स नः पुनान आ भर रयिं वीरवतीमिषम् । ईशानः सोम विश्वतः ॥ ३ । ५ ॥ 139

अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥ १ ॥ 140

अग्निमग्निं हवीमभिः सदा हवंत विश्पतिम् । हव्यवाहं पुरुप्रियम् ॥ २ ॥ 141

अग्ने देवां इहा वह जज्ञानो वृक्तबर्हिषे । असि होता न ईड्यः ॥ ३ । ६ ॥ 142

मित्रं वयं हवामहे वरुणं सोमपीतये । या जाता पूतदक्षसा ॥ १ ॥ 143

ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती । ता मित्रावरुणा हुवे ॥ २ ॥ 144

वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः । करतां नः सुराधसः ॥ ३ । ७ ॥ 145

इंद्रमिद्गाथिनो बृहदिंद्रमर्केभिरर्किणः । इंद्रं वाणीरनूषत ॥ १ ॥ 146

इंद्र इद्धर्योः सचा संमिश्ल आ वचोयुजा । इंद्रो वज्री हिरण्ययः ॥ २ ॥ 147

इंद्र वाजेषु नो ऽव सहस्रप्रधनेषु च । उग्र उग्राभिरूतिभिः ॥ ३ ॥ 148

इंद्रो दीर्घाय चक्षस आ सूर्यं रोहयद्दिवि । वि गोभिरद्रिमैरयत् ॥ ४ । २ ॥ 149

इंद्रे अग्ना नमो बृहत्सुवृक्तिमेरयामहे । धिया धेना अवस्यवः ॥ १ ॥ 150

ता हि शश्वंत ईडत इत्था विप्रास ऊतये । सबाधो वाजसातये ॥ २ ॥ 151

ता वां गीर्भिर्विपन्युवः प्रयस्वंतो हवामहे । मेधसाता सनिष्यवः ॥ ३ । ९ ॥ 152

वृषा पवस्व धारया मरुत्वते च मत्सरः । विश्वा दधान ओजसा ॥ १ ॥ 153

तं त्वा धर्तारमोण्योः३ः पवमान स्वर्दृशम् । हिन्वे वाजेषु वाजिनम् ॥ २ ॥ 154

अया चित्तो विपानया हरिः पवस्व धारया । युजं वाजेषु चोदय ॥ ३ । १० ॥ 155

वृषा शोणो अभिकनिक्रदद्गा नदयन्नेषि पृथिवीमुत द्याम् ।

इंद्रस्येव वग्नुरा शृण्व आजौ प्रचोदयन्नर्षसि वाचमेमाम् ॥ १ ॥ 156

रसाय्यः पयसा पिन्वमान ईरयन्नेषि मधुमंतमंशुम् ।

पवमान संतनिमेषि कृण्वन्निंद्राय सोम परिषिच्यमानः ॥ २ ॥ 157

एवा पवस्व मदिरो मदायोदग्राभस्य नमयन्वधस्नुम् ।

परि वर्णं भरमाणो रुशंतं गव्युर्नो अर्ष परि सोम सिक्तः ॥ ३ । ११ ॥ 158

त्वामिद्धि हवामहे सातौ वाजस्य कारवः ।

त्वां वृत्रेष्विंद्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥ १ ॥ 159

स त्वं नश्चित्र वज्रहस्त धृष्णुया मह स्तवानो अद्रिवः ।

गामश्वं रथ्यमिंद्र सं किर सत्रा वाजं न जिग्युषे ॥ २ । १२ ॥ 160

Brihat Sâma

अभि प्र वः सुराधसमिंद्रमर्च यथा विदे ।

यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥ १ ॥ 161

शतानीकेव प्र जिगाति धृष्णुया हंति वृत्राणि दाशुषे ।

गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसः ॥ २ । १३ ॥ 162

त्वामिदा ह्यो नरोऽपीप्यन्वज्रिन्भूर्णयः । 163

स इंद्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि ॥ १ ॥ 163

मत्स्वा सुशिप्रिन्हरिवस्तमीमहे त्वया भूषंति वेधसः ।
तव श्रवांस्युपमान्युक्थ्य सुतेष्विंद्र गिर्वणः ॥ २ । १४ ॥ 164

यस्ते मदो वरेण्यस्तेना पवस्वांधसा । देवावीरघशंसहा ॥ १ ॥ 165

जघ्निर्वृत्रममित्रियं सस्निर्वाजं दिवेदिवे । गोषातिरश्वसा असि ॥ २ ॥ 166

संमिश्लो अरुषो भुवः सूपस्थाभिर्न धेनुभिः । सीदं छ्येनो न योनिमा ॥ ३ । १५ ॥ 167

अयं पूषा रयिर्भगः सोमः पुनानो अर्षति ।
पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥ १ ॥ 168

समु प्रिया अनूषत गावो मदाय घृष्वयः ।
सोमासः कृण्वते पथः पवमानास इंदवः ॥ २ ॥ 169

य ओजिष्ठस्तमा भर पवमान श्रवाय्यम् ।
यः पंच चर्षणीरभि रयिं येन वनामहे ॥ ३ । १६ ॥ 170

वृषा मतीनां पवते विचक्षणः सोमो अह्नां प्रतरीतोषसां दिवः ।
प्राणा सिंधूनां कलशां अचिक्रददिंद्रस्य हार्द्यविशन्मनीषिभिः ॥ १ ॥ 171

मनीषिभिः पवते पूर्व्यः कविर्नृभिर्यतः परि कोशां असिष्यदत् ।
त्रितस्य नाम जनयन्मधु क्षरन्निंद्रस्य वायुं सख्याय वर्धयन् ॥ २ ॥ 172

अयं पुनान उषसो अरोचयदयं सिंधुभ्यो अभवदु लोककृत् ।
अयं त्रिः सप्त दुदुह्वान आशिरं सोमो हृदे पवते चारु मत्सरः ॥ ३ । १७ ॥ 17[illegible]

एवा ह्यसि वीरयुरेवा शूर उत स्थिरः। एवा ते राध्यं मनः ॥१॥ 174

एवा रातिस्तुवीमघ विश्वेभिर्धायि धातृभिः। अधा चिदिंद्र नः सचा ॥२॥ 175

मो षु ब्रह्मेव तंद्रयुर्भुवो वाजानां पते। मत्स्वा सुतस्य गोमतः ॥३।१८॥ 176

इंद्रं विश्वा अवीवृधंत्समुद्रव्यचसं गिरः।

रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥१॥ 177

सख्ये त इंद्र वाजिनो मा भेम शवसस्पते।

त्वामभि प्र णोनुमो जेतारमपराजितम् ॥२॥ 178

पूर्वीरिंद्रस्य रातयो न वि दस्यंत्यूतयः।

यदा वाजस्य गोमत स्तोतृभ्यो मंहते मघम् ॥३।१९॥ 179

॥ इति अर्धप्रपाठकः ॥

एत असृग्रमिंदवस्तिरः पवित्रमाशवः। विश्वान्यभि सौभगा ॥१॥ 180

विघ्नंतो दुरिता पुरु सुगा तोकाय वाजिनः। त्मना कृण्वंतो अर्वतः ॥२॥ 181

कृण्वंतो वरिवो गवेऽभ्यर्षंति सुष्टुतिम्। इडामस्मभ्यं संयतम् ॥३।१॥ 182

राजा मेधाभिरीयते पवमानो मनावधि। अंतरिक्षेण यातवे ॥१॥ 183

आ नः सोम सहो जुवो रूपं न वर्चसे भर। सुष्वाणो देववीतये ॥२॥ 184

आ न इंदो शातग्विनं गवां पोषं स्वश्व्यम्। वहा भगत्तिमूतये ॥३।२॥ 185

तं त्वा नृम्णानि बिभ्रतं सधस्थेषु महो दिवः। चारुं सुकृत्ययेमहे ॥१॥ 186

संवृक्तधृष्णुमुक्थ्यं महामहिव्रतं मदम् । शतं पुरो रुरुक्षणिम् ॥ २ ॥ 187

अतस्त्वा रयिरभ्ययद्राजानं सुक्रतो दिवः । सुपर्णो अव्यथी भरत् ॥ ३ ॥ 188

अधा हिन्वान इंद्रियं ज्यायो महित्वमानशे । अभिष्टिकृद्विचर्षणिः ॥ ४ ॥ 189

विश्वस्मा इत् स्वर्दृशे साधारणं रजस्तुरम् । गोपामृतस्य विर्भरत् ॥ ५।३ ॥ 190

इषे पवस्व धारया मृज्यमानो मनीषिभिः । इंदो रुचाभि गा इहि ॥ १ ॥ 191

पुनानो वरिवस्कृध्यूर्जं जनाय गिर्वणः । हरे सृजान आशिरम् ॥ २ ॥ 192

पुनानो देववीतय इंद्रस्य याहि निष्कृतम् । द्युतानो वाजिभिर्हितः ॥ ३।४ ॥ 193

अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड्जुह्वास्यः ॥ १ ॥ 194

यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति । तस्य स्म प्राविता भव ॥ २ ॥ 195

यो अग्निं देववीतये हविष्मां आविवासति । तस्मै पावक मृडय ॥ ३।५ ॥ 196

मित्रं हुवे पूतदक्षं वरुणं च रिशादसम् । धियं घृताचीं साधंता ॥ १ ॥ 197

ऋतेन मित्रावरुणावृतावृधावृतस्पृशा । क्रतुं बृहंतमाशाथे ॥ २ ॥ 198

कवी नो मित्रावरुणा तुविजाता उरुक्षया । दक्षं दधाते अपसम् ॥ ३।६ ॥ 199

इंद्रेण सं हि दृक्षसे संजग्मानो अबिभ्युषा । मंदू समानवर्चसा ॥ १ ॥ 200

आदह स्वधामनु पुनर्गर्भत्वमेरिरे । दधाना नाम यज्ञियम् ॥ २ ॥ 201

वीडु चिदारुजत्नुभिर्गुहा चिदिंद्र वह्निभिः । अविंद उस्रिया अनु ॥ ३।७ ॥ 202

ता हुवे ययोरिदं पप्ने विश्वं पुरा कृतं । इंद्राग्नी न मर्धतः ॥ १ ॥ 203

उग्रा विघनिना मृध इंद्राग्नी हवामहे । ता नो मृडात ईदृशे ॥ २ ॥ 204

कृथो वृत्राण्यार्या कृथो दासानि सत्पती । कृथो विश्वा अप द्विषः ॥३।८॥ 205

अभि सोमास आयवः पवंते मद्यं मदम् ।

समुद्रस्याधि विष्टपे मनीषिणो मत्सरासः मदच्युतः ॥१॥ 206

तरत्समुद्रं पवमान ऊर्मिणा राजा देव ऋतं बृहत् ।

अर्षा मित्रस्य वरुणस्य धर्मणा प्र हिन्वान ऋतं बृहत् ॥२॥ 207

नृभिर्येमाणो हर्यतो विचक्षणो राजा देवः समुद्र्यः ॥३।९॥ 208

तिस्रो वाच ईरयति प्र वह्निरृतस्य धीतिं ब्रह्मणो मनीषाम् ।

गावो यंति गोपतिं पृच्छमानाः सोमं यंति मतयो वावशानाः ॥१॥ 209

सोमं गावो धेनवो वावशानाः सोमं विप्रा मतिभिः पृच्छमानाः ।

सोमः सुत ऋच्यते पूयमानः सोमे अर्कास्त्रिष्टुभः सं नवंते ॥२॥ 210

एवा नः सोम परिषिच्यमान आ पवस्व पूयमानः स्वस्ति ।

इंद्रमा विश बृहता मदेन वर्धया वाचं जनया पुरंधिम् ॥३।१०॥ 211

यच्चाव इंद्र ते शतंꣳ शतं भूमीरुत स्युः ।

न त्वा वज्रिंत्सहस्रꣳ सूर्या अनु न जातमष्ट रोदसी ॥१॥ 212 Virūpa

आ पप्राथ महिना वृष्ण्या वृषन्विश्वा शविष्ठ शवसा ।

अस्माꣳ अव मघवन्गोमति व्रजे वज्रिं चित्राभिरूतिभिः ॥२।११॥ 213

वयं घ त्वा सुतावंत आपो न वृक्तबर्हिषः ।

पवित्रस्य प्रस्रवणेषु वृत्रहन्परि स्तोतार आसते ॥१॥ 214

स्वरंति त्वा सुते नरो वसो निरेक उक्थिनः ।
कदा सुतं तृषाण ओक आ गमदिंद्र स्वब्दीव वंसगः ॥ २॥ 215
कण्वेभिर्धृष्णवा धृषद्वाजं दर्षि सहस्रिणम् ।
पिशंगरूपं मघवन्विचर्षणे मक्षू गोमंतमीमहे ॥ ३ । १२ ॥ 216
तरणिरित्सिषासति वाजं पुरंध्या युजा ।
आ व इंद्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रुवम् ॥ १ ॥ 217
न दुष्टुतिर्द्रविणोदेषु शस्यते न स्रेधंतं रयिर्नशत् ।
सुशक्तिरिन्मघवं तुभ्यं मावते देष्णं यत्पार्ये दिवि ॥ २ । १३ ॥ 218
तिस्रो वाच उदीरते गावो मिमंति धेनवः । हरिरेति कनिक्रदत् ॥ १ ॥ 219
अभि ब्रह्मीरनूषत यह्वीर्ऋतस्य मातरः । मर्जयंतीर्दिवः शिशुम् ॥ २ ॥ 22[illegible]
रायः समुद्रांश्चतुरो ऽस्मभ्यं सोम विश्वतः । आ पवस्व सहस्रिणः ॥ ३ । १४ ॥ 22[illegible]
सुतासो मधुमत्तमाः सोमा इंद्राय मंदिनः ।
पवित्रवंतो अक्षरं देवान्गछंतु वो मदाः ॥ १ ॥ 222
इंदुरिंद्राय पवत इति देवासो अब्रुवन् ।
वाचस्पतिर्मखस्यते विश्वस्येशान ओजसः ॥ २ ॥ 223
सहस्रधारः पवते समुद्रो वाचमींखयः ।
सोमस्पती रयीणां सखेंद्रस्य दिवेदिवे ॥ ३ । १५ ॥ 224
पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।

अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहंतः सं तदाशत ॥ १ ॥ 225
तपोष्पवित्रं विततं दिवस्पदे ऽ र्चंतो अस्य तंतवो व्यस्थिरन् ।
अवंत्यस्य पवितारमाशवो दिवः पृष्ठमधि रोहंति तेजसा ॥ २ ॥ 226
अरूरुचदुषसः पृश्निरग्रिय उक्षा मिमेति भुवनेषु वाजयुः ।
मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमा दधुः ॥ ३ । १६ ॥ 227
प्र मꣳहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे ।
उपस्तुतासो अग्नये ॥ १ ॥ 228
आ वꣳसते मघवा वीरवद्यशः समिद्धो द्युम्न्याहुतः ।
कुविन्नो अस्य सुमतिर्भवीयस्यच्छा वाजेभिरागमत् ॥ २ । १७ ॥ 229
तं ते मदं गृणीमसि वृषणं पृक्षु सासहिम् ।
उ लोककृत्नुमद्रिवो हरिश्रियम् ॥ १ ॥ 230
येन ज्योतीꣳष्यायवे मनवे च विवेदिथ ।
मंदानो अस्य बर्हिषो वि राजसि ॥ २ ॥ 231
तदद्या चित्त उक्थिनो ऽ नु ष्टुवंति पूर्वथा ।
वृषपत्नीरपो जया दिवेदिवे ॥ ३ । १८ ॥ 232
श्रुधी हवं तिरश्च्या इंद्र यस्त्वा सपर्यति ।
सुवीर्यस्य गोमतो रायस्पूर्धि महाꣳ असि ॥ १ ॥ 233
यस्त इंद्र नवीयसीं गिरं मंद्रामजीजनत् । 234

चिकित्विन्मनसं धियं प्रत्नामृतस्य पिप्युषीम् ॥ २ ॥ 234

तमु ष्टवाम यं गिर इंद्रमुक्थानि वावृधुः ।

पुरूण्यस्य पौंस्या सिषासंतो वनामहे ॥ ३ । ११ ॥ 235

॥ इति द्वितीयः प्रपाठकः ॥

प्र त आश्विनीः पवमान धेनवो दिव्या असृग्रन्पयसा धरीमणि ।

प्रांतरिक्षात्स्थाविरीस्ते असृक्षत ये त्वा मृजंत्यृषिषाण वेधसः ॥ १ ॥ 236

उभयतः पवमानस्य रश्मयो ध्रुवस्य सतः परि यंति केतवः ।

यदी पवित्रे अधि मृज्यते हरिः सत्ता नि योनौ कलशेषु सीदति ॥ २ ॥ 23

विश्वा धामानि विश्वचक्ष ऋभ्वसः प्रभोष्टे सतः परि यंति केतवः

व्यानशी पवसे सोम धर्मणा पतिर्विश्वस्य भुवनस्य राजसि ॥ ३ । १ ॥ 23

पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम् । ज्योतिर्वैश्वानरं बृहत् ॥ १ ॥ 23

पवमान रसस्तव मदो राजन्नदुच्छुनः । वि वारमव्यमर्षति ॥ २ ॥ 24

पवमानस्य ते रसो दक्षो वि राजति द्युमान् । ज्योतिर्विश्वं स्वर्दृशे ॥ ३ । २ ॥ 24

प्र यद्गावो न भूर्णयस्त्वेषा अयासो अक्रमुः । घ्नंतः कृष्णामप त्वचम् ॥ १ ॥ 2

सुवितस्य वनामहे ऽति सेतुं दुराय्यम् । साह्याम दस्युमव्रतम् ॥ २ ॥ 2

शृण्वे वृष्टेरिव स्वनः पवमानस्य शुष्मिणः । चरंति विद्युतो दिवि ॥ ३ ॥ 2

आ पवस्व महीमिषं गोमदिंदो हिरण्यवत् । अश्ववत्सोम वीरवत् ॥ ४ ॥ 2

पवस्व विश्वचर्षण आ मही रोदसी पृण। उषाः सूर्यो न रश्मिभिः॥५॥ 246

परि नः शर्मयंत्या धारया सोम विश्वतः। सरा रसेव विष्टपम्॥६।३॥ 247

आशुरर्ष बृहन्मते परि प्रियेण धाम्ना। यत्रा देवा इति ब्रुवन्॥१॥ 248

परिष्कृण्वन्ननिष्कृतं जनाय यातयन्निषः। पृष्टिं दिवः परि स्रव॥२॥ 249

अयं स यो दिवस्परि रघुयामा पवित्र आ। सिंधोरूर्मा व्यक्षरत्॥३॥ 250

सुत एति पवित्र आ त्विषिं दधान ओजसा। विचक्षाणो विरोचयन्॥४॥ 251

आविवासन्परावतो अथो अर्वावतः सुतः। इंद्राय सिच्यते मधु॥५॥ 252

समीचीना अनूषत हरिं हिन्वंत्यद्रिभिः। इंदुमिंद्राय पीतये॥६।४॥ 253

हिन्वंति सूरमुस्रयः स्वसारो जामयस्पतिम्। महामिंदुं महीयुवः॥१॥ 254

पवमान रुचारुचा देव देवेभ्यः सुतः। विश्वा वसून्या विश॥२॥ 255

आ पवमान सुष्टुतिं वृष्टिं देवेभ्यो दुवः। इषे पवस्व संयतम्॥३।५॥ 256

जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे।

घृतप्रतीको बृहता दिविस्पृशा द्युमद्वि भाति भरतेभ्यः शुचिः॥१॥ 257

त्वामग्ने अंगिरसो गुहा हितमन्वविंदं छिश्रियाणं वनेवने।

स जायसे मथ्यमानः सहो महत्वामाहुः सहसस्पुत्रमंगिरः॥२॥ 258

यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समिंधते।

इंद्रेण देवैः सरथं स बर्हिषि सीदन्नि होता यजथाय सुक्रतुः॥३।६॥ 259

अयं वां मित्रावरुणा सुतः सोम ऋतावृधा। ममेदिह श्रुतं हवम्॥१॥ 260

राजानावनभिद्रुहा ध्रुवे सदस्युत्तमे । सहस्रस्थूण आशाते ॥ २ ॥

ता सम्राजा घृतासुती आदित्या दानुनस्पती । सचेते अनवह्वरम् ॥ ३ । ७ ॥

इंद्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः । जघान नवतीर्नव ॥ १ ॥

इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितम् । तद्विदच्छर्यणावति ॥ २ ॥

अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् । इत्था चंद्रमसो गृहे ॥ ३ । ८ ॥

इयं वामस्य मन्मन इंद्राग्नी पूर्व्यस्तुतिः । अभ्राद्वृष्टिरिवाजनि ॥ १ ॥

शृणुतं जरितुर्हवमिंद्राग्नी वनतं गिरः । ईशाना पिप्यतं धियः ॥ २ ॥

मा पापत्वाय नो नरेंद्राग्नी माभिशस्तये । मा नो रीरधतं निदे ॥ ३ । ९ ॥

पवस्व दक्षसाधनो देवेभ्यः पीतये हरे । मरुद्भ्यो वायवे मदः ॥ १ ॥

सं देवैः शोभते वृषा कविर्योनावधि प्रियः । पवमानो अदाभ्यः ॥ २ ॥

पवमान धिया हितो३ऽभि योनिं कनिक्रदत् । धर्मणा वायुमारुहः ॥ ३ । १० ॥

तवाहं सोम रारण सख्य इंदो दिवेदिवे ।
पुरूणि बभ्रो नि चरंति मामव परिधीँरति ताँ इहि ॥ १ ॥

तवाहं नक्तमुत सोम ते दिवा दुहानो बभ्र ऊधनि ।
घृणा तपंतमति सूर्यं परः शकुना इव पप्तिम ॥ २ । ११ ॥

पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः । शुंभंति विप्रं धीतिभिः ॥ १ ॥

आ योनिमरुणो रुहद्गमदिंद्रो वृषा सुतम् । ध्रुवे सदसि सीदतु ॥ २ ॥

नूनो रयिं महामिंदोऽस्मभ्यं सोम विश्वतः । आ पवस्व सहस्रिणम् ॥ ३ । १२ ॥

पिबा सोममिंद्र मंदतु त्वा यं ते सुषाव हर्यश्वाद्रिः ।
सोतुर्बाहुभ्यां सुयतो नार्वा ॥ १ ॥ Mahā vairāja 277
यस्ते मदो युज्यश्चारुरस्ति येन वृत्राणि हर्यश्व हंसि ।
स त्वामिंद्र प्रभूवसो ममत्तु ॥ २ ॥ 278
बोधा सु मे मघवन्वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्तिम् ।
इमा ब्रह्म सधमादे जुषस्व ॥ ३ । १३ ॥ 279
विश्वाः पृतना अभिभूतरं नरः सजूस्ततक्षुरिंद्रं जजनुश्च राजसे ।
क्रत्वे वरे स्थेमन्यामुरीमुतोग्रमोजिष्ठं तरसं तरस्विनम् ॥ १ ॥ 280
नेमिं नमंति चक्षसा मेषं विप्रा अभिस्वरे ।
सुदीतयो वो अद्रुहो ऽपि कर्णे तरस्विनः समृक्वभिः ॥ २ ॥ 281
समु रेभासो अस्वरन्निंद्रं सोमस्य पीतये ।
स्वःपतिर्यदी वृधे धृतव्रतो ह्योजसा समूतिभिः ॥ ३ । १४ ॥ 282
यो राजा चर्षणीनां याता रथेभिरध्रिगुः ।
विश्वासां तरुता पृतनानां ज्येष्ठं यो वृत्रहा गृणे ॥ १ ॥ 283
इंद्रं तं शुंभ पुरुहन्मन्नवसे यस्य द्विता विधर्तरि ।
हस्तेन वज्रः प्रति धायि दर्शतो महां देवो न सूर्यः ॥ २ । १५ ॥ 284
परि प्रिया दिवः कविर्वयांसि नप्त्योर्हितः । स्वानैर्याति कविक्रतुः ॥ १ ॥ 285
स सूनुर्मातरा शुचिर्जातो जाते अरोचयत् । महान्मही ऋतावृधा ॥ २ ॥ 286

प्रप्र क्षयाय पन्यसे जनाय जुष्टो अद्रुहः। वीत्यर्ष पनिष्टये ॥ ३ । १६ ॥ 287

त्वꣳ ह्याऽ३ंग दैव्य पवमान जनिमानि द्युमत्तमः।
अमृतत्वाय घोषयन् ॥ १ ॥ 288

येना नवग्वा दध्यङ्ङपोर्नुते येन विप्रास आपिरे।
देवानाꣳ सुम्ने अमृतस्य चारुणो येन श्रवाꣳस्याशत ॥ ३ । १७ ॥ 289

सोमः पुनान ऊर्मिणाव्यं वारं वि धावति।
अग्रे वाचः पवमानः कनिक्रदत् ॥ १ ॥ 290

धीभिर्मृजंति वाजिनं वने क्रीडंतमत्यविम्।
अभि त्रिपृष्ठं मतयः समस्वरन् ॥ २ ॥ 291

असर्जि कलशाꣳ अभि मीढ्वांत्सप्तिर्न वाजयुः।
पुनानो वाचं जनयन्नसिष्यदत् ॥ ३ । १८ ॥ 292

सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः।
जनिताग्नेर्जनिता सूर्यस्य जनितेंद्रस्य जनितोत विष्णोः ॥ १ ॥ 293

ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम्।
श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ सोमः पवित्रमत्येति रेभन् ॥ २ ॥ 294

प्रावीविपद्वाच ऊर्मिं न सिंधुर्गिरं स्तोमान्पवमानो मनीषाः।
अंतः पश्यन्वृजनेमावराण्या तिष्ठति वृषभो गोषु जानन् ॥ ३ । १९ ॥ 295

अग्निं वो वृधंतमध्वराणां पुरूतमम्। अच्छा नप्त्रे सहस्वते ॥ १ ॥ 296

अयं यथा न आभुवत्त्वष्टा रूपेव तक्ष्या । अस्य क्रत्वा यशस्वतः ॥२॥ 297

अयं विश्वा अभि श्रियोऽग्निर्देवेषु पत्यते । आ वाजैरुप नो गमत् ॥३।२०॥ 298

इममिंद्र सुतं पिब ज्येष्ठममर्त्यं मदम् ।
शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने ॥१॥ 299

न किष्ट्वद्रथीतरो हरी यदिंद्र यच्छसे ।
न किष्ट्वानु मज्मना न किः स्वश्व आनशे ॥२॥ 300

इंद्राय नूनमर्चतोक्थानि च ब्रवीतन ।
सुता अमत्सुरिंदवो ज्येष्ठं नमस्यता सहः ॥३।२१॥ 301

इंद्र जुषस्व प्र वहा याहि शूर हरिह ।
पिबा सुतस्य मतिर्न मधोश्चकानश्चारुर्मदाय ॥१॥
इंद्र जठरं नव्यं न पृणस्व मधोर्दिवो न ।
अस्य सुतस्य स्वा३र्नोप त्वा मदाः सुवाचो अस्थुः ॥२॥ 303
इंद्रस्तुराषाण्मित्रो न जघान वृत्रं यतिर्न ।
बिभेद वलं भृगुर्न ससाहे शत्रून्मदे सोमस्य ॥३।२२॥ 304

302 Kholasi-Sama
Gaurivitam.

॥ इति अर्धप्रपाठकः ॥

गोवित्पवस्व वसुविद्धिरण्यविद्रेतोधा इंदो भुवनेष्वर्पितः ।
त्वꣳ सुवीरो असि सोम विश्ववित्तं त्वा नर उप गिरेम आसते ॥१॥ 305

त्वं नृचक्षा असि सोम विश्वतः पवमान वृषभ ता वि धावसि ।
स नः पवस्व वसुमद्धिरण्यवद्वयं स्याम भुवनेषु जीवसे ॥२॥ 306
ईशान इमा भुवनानि ईयसे युजान इंदो हरितः सुपर्ण्यः ।
तास्ते क्षरंतु मधुमद्घृतं पयस्तव व्रते सोम तिष्ठंतु कृष्टयः ॥३।१॥ 307
पवमानस्य विश्ववित्प्र ते सर्गा असृक्षत । सूर्यस्येव न रश्मयः ॥१॥ 308
केतुं कृण्वं दिवस्परि विश्वा रूपाभ्यर्षसि । समुद्रः सोम पिन्वसे ॥२॥ 309
जज्ञानो वाचमिष्यसि पवमान विधर्मणि। क्रंदं देवो न सूर्यः ॥३।२॥ 310
प्र सोमासो अधन्विषुः पवमानास इंदवः । श्रीणाना अप्सु वृंजते॥१॥ 311
अभि गावो अधन्विषुरापो न प्रवता यतीः । पुनाना इंद्रमाशत ॥२॥ 31
प्र पवमान धन्वसि सोमेंद्राय मादनः । नृभिर्यतो वि नीयसे ॥३॥ 313
इंदो यदद्रिभिः सुतः पवित्रं परिदीयसे । अरमिंद्रस्य धाम्ने ॥४॥ 314
त्वं सोम नृमादनः पवस्व चर्षणीधृतिः । सस्निर्यो अनुमाद्यः ॥५॥ 315
पवस्व वृत्रहंतम उक्थेभिरनुमाद्यः । शुचिः पावको अद्भुतः ॥६॥ 316
शुचिः पावक उच्यते सोमः सुतःस मधुमान्। देवावीरघशंसहा॥७।३॥ 31
प्र कविर्देववीतये ऽव्या वारेभिरव्यत। साह्वान्विश्वा अभि स्पृधः ॥१॥ 3
स हि ष्मा जरितृभ्य आ वाजं गोमंतमिन्वति। पवमानः सहस्रिणम्॥२॥ 3
परि विश्वानि चेतसा मृज्यसे पवसे मती। स नः सोम श्रवो विदः ॥३॥ 3
अभ्यर्ष बृहद्यशो मघवद्भ्यो ध्रुवं रयिम्। इषं स्तोतृभ्य आ भर ॥४॥ 3

त्वꣳ राजेव सुव्रतो गिरः सोमाविवेशिथ । पुनानो वह्ने अद्भुत ॥५॥ 322
स वह्निरप्सु दुष्टरो मृज्यमानो गभस्त्योः । सोमश्चमूषु सीदति ॥६॥ 323
क्रीडुर्मखो न मꣳहयुः पवित्रꣳ सोम गच्छसि । दधत्स्तोत्रे सुवीर्यम् ॥७।४॥ 324
यवंयवं नो अंधसा पुष्टंपुष्टं परि स्रव । विश्वा च सोम सौभगा ॥१॥ 325
इंदो यथा तव स्तवो यथा ते जातमंधसः । नि बर्हिषि प्रिये सदः ॥२॥ 326
उत नो गोविदश्ववित्पवस्व सोमांधसा । मक्षूतमेभिरहभिः ॥३॥ 327
यो जिनाति न जीयते हंति शत्रुमभीत्य । स पवस्व सहस्रजित् ॥४।५॥ 328
यास्ते धारा मधुश्चुतोऽसृग्रमिंद ऊतये । ताभिः पवित्रमासदः ॥१॥ 329
सो अर्षेंद्राय पीतये तिरो वाराण्यव्यया । सीदन्नृतस्य योनिमा ॥२॥ 330
त्वꣳ सोम परि स्रव स्वादिष्ठो अंगिरोभ्यः । वरिवोविद्घृतं पयः ॥३।६॥ 331
तव श्रियो वर्ष्यस्येव विद्युतोऽग्नेश्चिकित्र उषसामिवेतयः ।
यदोषधीरभिसृष्टो वनानि च परि स्वयं चिनुषे अन्नमासनि ॥१॥ 332
वातोपजूत इषितो वशाꣳ अनु तृषु यदन्ना वेविषद्वितिष्ठसे ।
आ ते यतंते रथ्यो३यथा पृथक्शर्धाꣳस्यग्ने अजरस्य धक्षतः ॥२॥ 333
मेधाकारं विदथस्य प्रसाधनमग्निꣳ होतारं परिभूतरं मतिम् ।
त्वामर्भस्य हविषः समानमित्त्वां महो वृणते नान्यं त्वत् ॥३।७॥ 334
पुरूरुणा चिद्ध्यस्त्यवो नूनं वां वरुण । मित्र वꣳसि वाꣳ सुमतिम् ॥१॥ 335
ता वाꣳ सम्यगद्रुह्वाणेषमश्याम धाम च । वयं वां मित्रा स्याम ॥२॥ 336

पातं नो मित्रा पायुभिरुत त्रायेथाᳫं सुत्रात्रा । साह्याम दस्यूं तनूभिः ॥३॥८॥ 337

उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे अवेपयः । सोममिंद्र चमू सुतम् ॥ १ ॥ 338

अनु त्वा रोदसी उभे स्पर्धमानमददेताम् । इंद्र यद्दस्युहाभवः ॥ २ ॥ 339

वाचमष्टापदीमहं नवस्रक्तिमृतावृधम् । इंद्रात्परितन्वं ममे ॥ ३ । ९ ॥ 340

इंद्राग्नी युवामिमे३ऽभि स्तोमा अनूषत । पिबतᳫं शंभुवा सुतम् ॥ १ ॥ 341

या वाᳫं संति पुरुस्पृहो नियुतो दाशुषे नरा । इंद्राग्नी ताभिरा गतम् ॥२॥ 342

ताभिरा गच्छतं नरोपेदᳫं सवनᳫं सुतम् । इंद्राग्नी सोमपीतये ॥३। १० ॥ 343

अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत् । सीदन्योनौ वनेष्वा ॥ १ ॥ 344

अप्सा इंद्राय वायवे वरुणाय मरुद्भ्यः । सोमा अर्षंतु विष्णवे ॥ २ ॥ 345

इषं तोकाय नो दधदस्मभ्यᳫं सोम विश्वतः । आ पवस्व सहस्रिणम् ॥३। ११ ॥ 346

सोम उ ष्वाणः सोतृभिरधि ष्णुभिरवीनाम् ।

अश्वयेव हरिता याति धारया मंद्राय याति धारया ॥ १ ॥ 347

अनूपे गोमान्गोभिरक्षाः सोमो दुग्धाभिरक्षाः ।

समुद्रं न संवरणान्यग्मन्मंदी मदाय तोशते ॥ २ । १२ ॥ 348

यत्सोम चित्रमुक्थ्यं दिव्यं पार्थिवं वसु । तन्नः पुनान आ भर ॥ १ ॥ 349

वृषा पुनान आयूᳫंषि स्तनयन्नधि बर्हिषि । हरिः सन्योनिमासदः ॥२॥ 350

युवᳫं हि स्थः स्वःपती इंद्रश्च सोम गोपती । ईशाना पिप्यतं धियः ॥३ ।१३॥ 351

इंद्रो मदाय वावृधे शवसे वृत्रहा नृभिः ।

तमिन्मह्वत्स्वाजिषूतिमर्भे हवामहे स वाजेषु प्र नोऽविषत् ॥ १ ॥ 352

असि हि वीर सेन्यो ऽसि भूरि परादहिः ।
असि दभ्रस्य चिद्वृधो यजमानाय शिक्षसि सुन्वते भूरि ते वसु ॥ २ ॥ 353

यदुदीरत आजयः० ॥ ३ । १४ ॥ 354

स्वादोरित्था विषूवतः० ॥ १ ॥ 355

ता अस्य पृशनायुवः सोमꣳ श्रीणंति पृश्नयः ।
प्रिया इंद्रस्य धेनवो वज्रꣳ हिन्वंति सायकं वस्वीरनु स्वराज्यम् ॥ २ ॥ 356

ता अस्य नमसा सहः सपर्यंति प्रचेतसः ।
व्रतान्यस्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यम् ॥ ३ । १५ ॥ 357

असाव्यꣳशुर्मदायाप्सु दक्षो गिरिष्ठाः । श्येनो न योनिमासदत् ॥ १ ॥ 358

शुभ्रमंधो देववातमप्सु धौतं नृभिः सुतम् । स्वदंति गावः पयोभिः ॥ २ ॥ 359

आदीमश्वं न हेतारमशूशुभन्नमृताय । मधो रसꣳ सधमादे ॥ ३ । १६ ॥ 360

अभि द्युम्नं बृहद्यश इषस्पते दिदीहि देव देवयुम् ।
वि कोशं मध्यमं युव ॥ १ ॥ 361

आ वच्यस्व सुदक्ष चम्वोः सुतो विशां वह्निर्न विश्पतिः ।
वृष्टिं दिवः पवस्व रीतिमपो जिन्वन्गविष्टये धियः ॥ २ । १७ ॥ 362

प्राणा शिशुर्महीनाꣳ हिन्वन्नृतस्य दीधितिम् ।
विश्वा परि प्रिया भुवदध द्विता ॥ १ ॥ 363

उप त्रितस्य पाष्योऽ३रभक्त यद्गुहा पदम्।
यज्ञस्य सप्त धामभिरध प्रियम् ॥२॥ 364

त्रीणि त्रितस्य धारया पृष्ठेष्वैरयद्रयिम्।
मिमीते अस्य योजना वि सुक्रतुः ॥३।१८॥ 365

पवस्व वाजसातये पवित्रे धारया सुतः।
इंद्राय सोम विष्णवे देवेभ्यो मधुमत्तरः ॥१॥ 366

त्वां रिहंति धीतयो हरिं पवित्रे अद्रुहः।
वत्सं जातं न मातरः पवमाना विधर्मणि ॥२॥ 367

त्वं द्यां च महिव्रत पृथिवीं चाति जभ्रिषे।
प्रति द्रापिममुंचथाः पवमान महित्वना ॥३।१९॥ 368

इंदुर्वाजी पवते गोन्योघा इंद्रे सोमः सह इन्वन्मदाय।
हंति रक्षो बाधते पर्यरातिं वरिवस्कृण्वन्वृजनस्य राजा ॥१॥ 369

अध धारया मध्वा पृचानस्तिरो रोम पवते अद्रिदुग्धः।
इंदुरिंद्रस्य सख्यं जुषाणो देवो देवस्य मत्सरो मदाय ॥२॥ 370

अभि व्रतानि पवते पुनानो देवो देवांत्स्वेन रसेन पृंचन्।
इंदुर्धर्माण्यृतुथा वसानो दश क्षिपो अव्यत सानो अव्ये ॥३।२०॥ 371

आ ते अग्न इधीमहि द्युमंतं देवाजरम्।
यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषं स्तोतृभ्य आ भर ॥१॥ 372

आ ते अग्न ऋचा हविः शुक्रस्य ज्योतिषस्पते ।
सुश्चंद्र दस्म विश्पते हव्यवाट्तुभ्यं हूयत इषं स्तोतृभ्य आ भर ॥२॥ 373
ओभे सुश्चंद्र विश्पते दर्वी श्रीणीष आसनि ।
उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषं स्तोतृभ्य आ भर ॥३।२१॥ 374
इंद्राय साम गायत विप्राय बृहते बृहत् ।
ब्रह्मकृते विपश्चिते पनस्यवे ॥१॥ 375
त्वमिंद्राभिभूरसि त्वं सूर्यमरोचयः ।
विश्वकर्मा विश्वदेवो महाँ असि ॥२॥ 376
विभ्राजं ज्योतिषा स्वा३रगच्छो रोचनं दिवः ।
देवास्त इंद्र सख्याय येमिरे ॥३।२२॥ 377
असावि सोम इंद्र ते शविष्ठ धृष्णवा गहि ।
आ त्वा पृणक्त्विंद्रियं रजः सूर्यो न रश्मिभिः ॥१॥ 378
आ तिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी ।
अर्वाचीनं सु ते मनो ग्रावा कृणोतु वग्नुना ॥२॥ 379
इंद्रमिद्धरी वहतो ऽप्रतिधृष्टशवसम् ।
ऋषीणां सुष्टुतीरुप यज्ञं च मानुषाणाम् ॥३।२३॥ 380

॥ इति तृतीयप्रपाठकः ॥

ज्योतिर्यज्ञस्य पवते मधु प्रियं पिता देवानां जनिता विभूवसुः ।
दधाति रत्नं स्वधयोरपीच्यं मदिंतमो मत्सर इंद्रियो रसः ॥१॥ 381
अभिक्रंदन्कलशं वाज्यर्षति पतिर्दिवः शतधारो विचक्षणः ।
हरिर्मित्रस्य सदनेषु सीदति मर्मृजानो ऽविभिः सिंधुभिर्वृषा ॥२॥ 382
अग्रे सिंधूनां पवमानो अर्षस्यग्रे वाचो अग्रियो गोषु गच्छसि ।
अग्रे वाजस्य भजसे महद्धनं स्वायुधः सोतृभिः सोम सूयसे ॥३॥१॥ 383
असृक्षत प्र वाजिनो गव्या सोमासो अश्वया । शुक्रासो वीरयाशवः ॥१॥ 384
शुंभमाना ऋतायुभिर्मृज्यमाना गभस्त्योः । पवंते वारे अव्यये ॥२॥ 385
ते विश्वा दाशुषे वसु सोमा दिव्यानि पार्थिवा । पवंतामांतरिक्ष्या ॥३॥२॥ 386
पवस्व देववीरति पवित्रं सोम रंह्या । इंद्रमिंदो वृषा विश ॥१॥ 387
आ वच्यस्व महि प्सरो वृषेंदो द्युम्नवत्तमः । आ योनिं धर्णसिः सदः ॥२॥ 388
अधुक्षत प्रियं मधु धारा सुतस्य वेधसः । अपो वसिष्ट सुक्रतुः ॥३॥ 389
महांतं त्वा महीरन्वापो अर्षंति सिंधवः । यद्गोभिर्वासयिष्यसे ॥४॥ 390
समुद्रो अप्सु मामृजे विष्टंभो धरुणो दिवः । सोमः पवित्रे अस्मयुः ॥५॥ 391
अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः । सं सूर्येण दिद्युते ॥६॥ 392
गिरस्त इंद्र ओजसा मर्मृज्यंते अपस्युवः । याभिर्मदाय शुंभसे ॥७॥ 393
तं त्वा मदाय घृष्वय उ लोककृत्नुमीमहे । तव प्रशस्तये महे ॥८॥ 394
गोषा इंदो नृषा अस्यश्वसा वाजसा उत । आत्मा यज्ञस्य पूर्व्यः ॥९॥ 395

अस्मभ्यमिंदविंद्रियं मधोः पवस्व धारया। पर्जन्यो वृष्टिमाँ इव ॥ १०।३॥ 396
सना च सोम जेषि च पवमान महि श्रवः। अथा नो वस्यसस्कृधि ॥ १॥ 397
सना ज्योतिः सना स्वा३र्विश्वा च सोम सौभगा। अथा नो वस्यसस्कृधि॥२॥ 398
सना दक्षमुत क्रतुमप सोम मृधो जहि। अथा नो वस्यसस्कृधि ॥ ३॥ 399
पवीतारः पुनीतन सोममिंद्राय पातवे। अथा नो वस्यसस्कृधि ॥ ४॥ 400
त्वꣳ सूर्ये न आ भज तव क्रत्वा तवोतिभिः। अथा नो वस्यसस्कृधि ॥ ५॥ 401
तव क्रत्वा तवोतिभिर्ज्योक्पश्येम सूर्यम्। अथा नो वस्यसस्कृधि ॥ ६॥ 402
अभ्यर्ष स्वायुध सोम द्विबर्हसꣳ रयिम्। अथा नो वस्यसस्कृधि ॥ ७॥ 403
अभ्या३र्षानपच्युतो वाजिंत्समत्सु सासहिः। अथा नो वस्यसस्कृधि ॥ ८॥ 404
त्वां यज्ञैरवीवृधन्पवमान विधर्मणि। अथा नो वस्यसस्कृधि ॥ ९॥ 405
रयिं नश्चित्रमश्विनमिंदो विश्वायुमा भर। अथा नो वस्यसस्कृधि ॥ १०।४॥ 406
तरत्स मंदी धावति धारा सुतस्यांधसः। तरत्स मंदी धावति ॥ १॥ 407
उस्रा वेद वसूनां मर्तस्य देव्यवसः। तरत्स मंदी धावति ॥ २॥ 408
ध्वस्रयोः पुरुषंत्योरा सहस्राणि दद्महे। तरत्स मंदी धावति ॥ ३॥ 409
आ ययोस्त्रिꣳशतं तना सहस्राणि च दद्महे। तरत्स मंदी धावति ॥ ४।५॥ 410
एते सोमा असृक्षत गृणानाः शवसे महे। मदिंतमस्य धारया ॥ १॥ 411
अभि गव्यानि वीतये नृम्णा पुनानो अर्षसि। सनद्वाजः परि स्रव ॥ २॥ 412
उत नो गोमतीरिषो विश्वा अर्ष परिष्टुभः। गृणानो जमदग्निना ॥ ३।६॥ 413

इमꣳ स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।
भद्रा हि नः प्रमतिरस्य सꣳसद्यग्ने सख्ये मा रिषामा वयं तव ॥१॥ 414
भरामेध्मं कृणवामा हवीꣳषि ते चितयंतः पर्वणापर्वणा वयम् ।
जीवातवे प्रतराꣳ साधया धियो ऽ ग्ने सख्ये मा रिषामा वयं तव ॥२॥ 415
शकेम त्वा समिधꣳ साधया धियस्त्वे देवा हविरदंत्याहुतम् ।
त्वमादित्याꣳआ वह तान्ह्युꣳश्मस्यग्ने सख्ये मा रिषामा वयं तव ॥३।७॥ 416
प्रति वांꣳ सूर उदिते मित्रं गृणीषे वरुणम् । अर्यमणꣳ रिशादसम् ॥१॥ 417
राया हिरण्यया मतिरियमवृकाय शवसे । इयं विप्रा मेधसातये ॥२॥ 418
ते स्याम देव वरुण ते मित्र सूरिभिः सह । इषꣳ स्वश्च धीमहि ॥३।८॥ 419
भिंधि विश्वा अप द्विषः परि बाधो जही मृधः । वसु स्पार्हं तदा भर ॥१॥ 420
यस्य ते विश्वमानुषग्भूरेर्दत्तस्य वेदति । वसु स्पार्हं तदा भर ॥२॥ 421
यद्वीडाविंद्र यत्स्थिरे यत्पर्शाने पराभृतम् । वसु स्पार्हं तदा भर ॥३।९॥ 422
यज्ञस्य हि स्थ ऋत्विजा सस्नी वाजेषु कर्मसु । इंद्राग्नी तस्य बोधतम् ॥१॥ 423
तोशासा रथयावाना वृत्रहणापराजिता । इंद्राग्नी तस्य बोधतम् ॥२॥ 424
इदं वां मदिरं मध्वधुक्षन्नद्रिभिर्नरः । इंद्राग्नी तस्य बोधतम् ॥३।१०॥ 425
इंद्रायेंदो मरुत्वते पवस्व मधुमत्तमः । अर्कस्य योनिमासदम् ॥१॥ 426
तं त्वा विप्रा वचोविदः परिष्कृण्वंति धर्णसिम् । सं त्वा मृजंत्यायवः ॥२॥ 427
रसं ते मित्रो अर्यमा पिबंतु वरुणः कवे । पवमानस्य मरुतः ॥३।११॥ 428

मृज्यमानः सुहस्त्या समुद्रे वाचमिन्वसि ।
रयिं पिशंगं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥१॥ 429
पुनानो वारे पवमानो अव्यये वृषो अचिक्रदद्वने ।
देवानाꣳ सोम पवमान निष्कृतं गोभिरंजानो अर्षसि ॥२।१२॥ 430
एतमु त्यं दश क्षिपो मृजंति सिंधुमातरम् । समादित्येभिरख्यत ॥१॥ 431
समिंद्रेणोत वायुना सुत एति पवित्र आ। सꣳ सूर्यस्य रश्मिभिः ॥२॥ 432
स नो भगाय वायवे पूष्णे पवस्व मधुमान्। चारुर्मित्रे वरुणे च ॥३।१३॥ 433
रेवतीर्नः सधमाद इंद्रे संतु तुविवाजाः । क्षुमंतो याभिर्मदेम ॥१॥ 434
आ घ त्वावां त्मना युक्त स्तोतृभ्यो धृष्णवीयानः। अणोरक्षं न चक्र्योः ॥२॥ 435
आ यद्दुवः शतक्रतवा कामं जरितॄणाम्। अणोरक्षं न शचीभिः॥३।१४॥ 436
सुरूपकृत्नुमूतये सुदुघामिव गोदुहे । जुहूमसि द्यविद्यवि ॥१॥ 437
उप नः सवना गहि सोमस्य सोमपाः पिब। गोदा इद्रेवतो मदः॥२॥ 438
अथा ते अंतमानां विद्याम सुमतीनाम्। मा नो अति ख्य आ गहि॥३।१५॥ 439
उभे यदिंद्र रोदसी आपप्राथोषा इव ।
महांतं त्वा महीनाꣳ सम्राजं चर्षणीनाम् ।
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥१॥ 440
दीर्घं ह्यंकुशं यथा शक्तिं बिभर्षि मंतुमः ।
पूर्वेण मघवन्पदा वयामजो यथा यमः । 441

देवीजनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ २ ॥ 441

अव स्म दुर्हणायतो मर्तस्य तनुहि स्थिरम् ।

अधस्पदं तमीं कृधि यो अस्माँ अभिदासति ।

देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ ३ । १६ ॥ 442

परि स्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत् । मदेषु सर्वधा असि ॥ १ ॥ 443

त्वं विप्रस्त्वं कविर्मधु प्र जातमंधसः । मदेषु सर्वधा असि ॥ २ ॥ 444

त्वे विश्वे सजोषसो देवासः पीतिमाशत । मदेषु सर्वधा असि ॥ ३ । १७ ॥ 445

स सुन्वे यो वसूनां यो रायामानेता य इडानाम् ।

सोमो यः सुक्षितीनाम् ॥ १ ॥ 446

यस्य त इंद्रः पिबाद्यस्य मरुतो यस्य वार्यमणा भगः ।

आ येन मित्रावरुणा करामह एंद्रमवसे महे ॥ २ । १८ ॥ 447

तं वः सखायो मदाय पुनानमभि गायत ।

शिशुं न हव्यैः स्वदयंत गूर्तिभिः ॥ १ ॥ 448

सं वत्स इव मातृभिरिंदुर्हिन्वानो अज्यते ।

देवावीर्मदो मतिभिः परिष्कृतः ॥ २ ॥ 449

अयं दक्षाय साधनो ऽयं शर्धाय वीतये ।

अयं देवेभ्यो मधुमत्तरः सुतः ॥ ३ । १९ ॥ 450

सोमाः पवंत इंदवो ऽस्मभ्यं गातुवित्तमाः । 451

मित्राः स्वाना अरेपसः स्वाध्यः स्वर्विदः ॥१॥ 452

ते पूतासो विपश्चितः सोमासो दध्याशिरः ।
सूरासो न दर्शतासो जिगत्नवो ध्रुवा घृते ॥२॥ 453

सुष्वाणासो व्यद्रिभिश्चिताना गोरधि त्वचि ।
इषमस्मभ्यमभितः समस्वरन्वसुविदः ॥३।२०॥ 454

अया पवा पवस्वैना वसूनि मांश्चत्व इन्दो सरसि प्र धन्व ।
ब्रध्नश्चिदत्र वातो न जूतिं पुरुमेधाश्चित्तकवे नरं धात् ॥१॥ 455

उत न एना पवया पवस्वाधि श्रुते श्रवाय्यस्य तीर्थे ।
षष्टिं सहस्रा नैगुतो वसूनि वृक्षं न पक्वं धूनवद्रणाय ॥२॥ 456

महीमे अस्य वृष नाम शूषे मांश्चत्वे वा पृशने वा वधत्रे ।
अस्वापयन्निगुतः स्नेहयच्चापामित्राँ अपाचितो अचेतः ॥३।२१॥ 457

अग्ने त्वं नो अंतम उत त्राता शिवो भुवो वरूथ्यः ॥१॥ 458

वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमो रयिं दाः ॥२॥ 459

तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥३।२२॥ 460

इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः ॥१॥ 461

यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह सीषधातु ॥२॥ 462

आदित्यैरिन्द्रः सगणो मरुद्भिरस्मभ्यं भेषजा करत् ॥३।२३॥ 463

प्र वो ऽ चोर्प० ॥२४॥ 464

॥ इति अर्धप्रपाठकः ॥

प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति ।
महिव्रतः शुचिबंधुः पावकः पदा वराहो अभ्येति रेभन् ॥ १ ॥ 465
प्र हंसासस्तृपला वग्नुमच्छामादस्तं वृषगणा अयासुः ।
अंगोषिणं पवमानं सखायो दुर्मर्षं वाणं प्र वदंति साकम् ॥ २ ॥ 466
स योजत उरुगायस्य जूतिं वृथा क्रीडंतं मिमते न गावः ।
परीणसं कृणुते तिग्मशृंगो दिवा हरिर्ददृशे नक्तमृज्रः ॥ ३ ॥ 467
प्र स्वानासो रथा इवार्वंतो न श्रवस्यवः । सोमासो राये अक्रमुः ॥४॥ 468
हिन्वानासो रथा इव दधन्विरे गभस्त्योः । भरासः कारिणामिव ॥५॥ 469
राजानो न प्रशस्तिभिः सोमासो गोभिरंजते । यज्ञो न सप्त धातृभिः ॥ ६ ॥ 47
परि स्वानास इंदवो मदाय बर्हणा गिरा । मधो अर्षंति धारया ॥ ७ ॥ 47
आपानासो विवस्वतो जिन्वंत उषसो भगम् । सूरा अण्वं वि तन्वते ॥ ८ ॥ 47
अप द्वारा मतीनां प्रत्ना ऋण्वंति कारवः । वृष्णो हरस आयवः ॥ ९ ॥ 47
समीचीनास आशत होतारः सप्तजानयः । पदमेकस्य पिप्रतः ॥ १० ॥ 47
नाभा नाभिं न आ ददे चक्षुषा सूर्यं दृशे । कवेरपत्यमा दुहे ॥ ११ ॥ 47
अभि प्रियं दिवस्पदमध्वर्युभिर्गुहा हितम् । सूरः पश्यति चक्षसा ॥१२॥१॥ 47
असृग्रमिंदवः पथा धर्मन्नृतस्य सुश्रियः । विदाना अस्य योजना ॥ १ ॥ 47
प्र धारा मधो अग्रियो महीरपो वि गाहते । हविर्हविःषु वंद्यः ॥ २ ॥ 47
प्र युजा वाचो अग्रियो वृषो अचिक्रदद्वने । सद्माभि सत्यो अध्वरः ॥ ३ ॥ 47
परि यत्काव्या कविर्नृम्णा पुनानो अर्षति । स्वर्वाजी सिषासति ॥४॥ 48

पवमानो अभि स्पृधो विशो राजेव सीदति। यदीमृण्वंति वेधसः ॥५॥ 481

अव्या वारे परि प्रियो हरिर्वनेषु सीदति। रेभो वनुष्यते मती ॥६॥ 482

स वायुमिंद्रमश्विना साकं मदेन गच्छति । रणा यो अस्य धर्मणा ॥७॥ 483

आ मित्रे वरुणे भगे मधोः पवंत ऊर्मयः। विदाना अस्य शक्मभिः ॥८॥ 484

अस्मभ्यं रोदसी रयिं मध्वो वाजस्य सातये। श्रवो वसूनि सं जितम् ॥९॥ 485

आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे । पांतमा पुरुस्पृहम् ॥१०॥ 486

आ मंद्रमा वरेण्यमा विप्रमा मनीषिणम् । पांतमा पुरुस्पृहम् ॥११॥ 487

आ रयिमा सुचेतुनमा सुक्रतो तनूष्वा । पांतमा पुरुस्पृहम् ॥१२।२॥ 488

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् ।
कविं सम्राजमतिथिं जनानामासन्नः पात्रं जनयंत देवाः ॥१॥ 489

त्वां विश्वे अमृत जायमानं शिशुं न देवा अभि सं नवंते ।
तव क्रतुभिरमृतत्वमायन्वैश्वानर यत्पित्रोरदीदेः ॥२॥ 490

नाभिं यज्ञानां सदनं रयीणां महामाहावमभि सं नवंत ।
वैश्वानरं रथ्यमध्वराणां यज्ञस्य केतुं जनयंत देवाः ॥३।३॥ 491

प्र वो मित्राय गायत वरुणाय विपा गिरा । महिक्षत्रावृतं बृहत् ॥१॥ 492

सम्राजा या घृतयोनी मित्रश्चोभा वरुणश्च । देवा देवेषु प्रशस्ता ॥२॥ 493

ता नः शक्तं पार्थिवस्य महो रायो दिव्यस्य। महि वां क्षत्रं देवेषु ॥३।४॥ 494

इंद्राग्याहि चित्रभानो सुता इमे त्वायवः । अण्वीभिस्तना पूतास ॥१॥ 495

इंद्रा याहि धियेषितो विप्रजूतः सुतावतः । उप ब्रह्माणि वाघतः ॥२॥ 496
इंद्रा याहि तूतुजान उप ब्रह्माणि हरिवः । सुते दधिष्व नश्चनः ॥३।५॥ 497
तमीडिष्व यो अर्चिषा वना विश्वा परिष्वजत् । कृष्णा कृणोति जिह्वया ॥१॥ 498
य इद्ध आविवासति सुम्नमिंद्रस्य मर्त्यः । द्युम्नाय सुतरा अपः ॥२॥ 499
ता नो वाजवतीरिष आशून्पिपृतमर्वतः । इंद्रमग्निं च वोढवे ॥३।६॥ 500
प्रो अयासीदिंदुरिंद्रस्य निष्कृतं सखा सख्युर्न प्र मिनाति संगिरम् ।
मर्य इव युवतिभिः समर्षति सोमः कलशे शतयामना पथा ॥१॥ 501
प्र वो धियो मंद्रयुवो विपन्युवः पनस्युवः संवरणेष्वक्रमुः ।
हरिं क्रीडंतमभ्यनूषत स्तुभो ऽभि धेनवः पयसेदशिश्रयुः ॥२॥ 502
आ नः सोम संयतं पिप्युषीमिषमिंदो पवस्व पवमान ऊर्मिणा ।
या नो दोहते त्रिरहन्नसश्चुषी क्षुमद्वाजवन्मधुमत्सुवीर्यम् ॥३।७॥ 503
न किष्टं कर्मणा नशद्यश्चकार सदावृधम् ।
इंद्रं न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्णुमोजसा ॥१॥ 504
अषाढमुग्रं पृतनासु सासहिं यस्मिन्महीरुरुज्रयः ।
सं धेनवो जायमाने अनोनवुर्द्यावः क्षामीरनोनवुः ॥२।८॥ 505
सखाय आ नि षीदत पुनानाय प्र गायत ।
शिशुं न यज्ञैः परि भूषत श्रिये ॥१॥ 506
समी वत्सं न मातृभिः सृजता गयसाधनम् । 507

देवाव्याः मदमभि द्विशवसम् ॥ २ ॥ 507
पुनाता दक्षसाधनं यथा शर्धाय वीतये ।
यथा मित्राय वरुणाय शंतमम् ॥ ३ । ९ ॥ 508
प्र वाज्यक्षाः सहस्रधारस्तिरः पवित्रं वि वारमव्यम् ॥ १ ॥ 509
स वाज्यक्षाः सहस्ररेता अद्भिर्मृजानो गोभिः श्रीणानः ॥ २ ॥ 510
प्र सोम याहीन्द्रस्य कुक्षा नृभिर्येमाणो अद्रिभिः सुतः ॥ ३ । १० ॥ 511
ये सोमासः परावति ये अर्वावति सुन्विरे । ये वादः शर्यणावति ॥ १ ॥ 512
य आर्जीकेषु कृत्वसु ये मध्ये पस्त्यानाम् । ये वा जनेषु पंचसु ॥ २ ॥ 513
ते नो वृष्टिं दिवस्परि पवंतामा सुवीर्यम् । स्वाना देवास इंदवः ॥ ३ । ११ ॥ 514
आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात् । अग्ने त्वां कामये गिरा ॥ १ ॥ 515
पुरुत्रा हि सदृङसि दिशो विश्वा अनु प्रभुः । समत्सु त्वा हवामहे ॥ २ ॥ 516
समत्स्वग्निमवसे वाजयंतो हवामहे । वाजेषु चित्रराधसम् ॥ ३ । १२ ॥ 517
त्वं न इंद्रा भर ओजो नृम्णꣳ शतक्रतो विचर्षणे ।
आ वीरं पृतनासहम् ॥ १ ॥ 518
त्वꣳ हि नः पिता वसो त्वं माता शतक्रतो बभूविथ ।
अथा ते सुम्नमीमहे ॥ २ ॥ 519
त्वाꣳ शुष्मिन्पुरुहूत वाजयंतमुप ब्रुवे सहस्कृत ।
स नो रास्व सुवीर्यम् ॥ ३ । १३ ॥ 520

यदिंद्र चित्र मइह नास्ति त्वादातमद्रिवः ।
राधस्तन्नो विदद्वस उभयाहस्त्या भर ॥ १ ॥ 521

यन्मन्यसे वरेण्यमिंद्र द्युक्षं तदा भर ।
विद्याम तस्य ते वयमकूपारस्य दावनः ॥ २ ॥ 522

यत्ते दित्सु प्रराध्यं मनो अस्ति श्रुतं बृहत् ।
तेन दृढा चिदद्रिव आ वाजं दर्षि सातये ॥ ३ । १४ ॥ 523

॥ इति चतुर्थः प्रपाठकः ॥

शिशुं जज्ञानं हर्यतं मृजंति शुंभंति विप्रं मरुतो गणेन ।
कविर्गीर्भिः काव्येन कविः संत्सोमः पवित्रमत्येति रेभन् ॥ १ ॥ 524

ऋषिमना य ऋषिकृत्स्वर्षाः सहस्रनीथः पदवीः कवीनाम् ।
तृतीयं धाम महिषः सिषासंत्सोमो विराजमनु राजति ष्टुप् ॥ २ ॥ 525

चमूषच्छ्येनः शकुनो विभृत्वा गोविंदुर्द्रप्स आयुधानि बिभ्रत् ।
अपामूर्मिं सचमानः समुद्रं तुरीयं धाम महिषो विवक्ति ॥ ३ । १ ॥ 526

एते सोमा अभि प्रियमिंद्रस्य काममक्षरन् । वर्धंतो अस्य वीर्यम् ॥ १ ॥ 527

पुनानासश्चमूषदो गछंतो वायुमश्विना । ते नो धत्त सुवीर्यम् ॥ २ ॥ 528

इंद्रस्य सोम राधसे पुनानो हार्दि चोदय । देवानां योनिमासदम् ॥ ३ ॥ 529

मृजंति त्वा दश क्षिपो हिन्वंति सप्त धीतयः । अनु विप्रा अमादिषुः ॥ ४ ॥ 530

देवेभ्यस्त्वा मदाय कꣳ सृजानमति मेष्यः । सं गोभिर्वासयामसि ॥५॥ 531

पुनानः कलशेष्वा वस्त्राण्यरुषो हरिः । परि गव्यान्यव्यत ॥६॥ 532

मघोन आ पवस्व नो जहि विश्वा अप द्विषः । इंदो सखायमा विश ॥७॥ 533

नृचक्षसं त्वा वयमिंद्रपीतꣳ स्वर्विदम् । भक्षीमहि प्रजामिषम् ॥८॥ 534

वृष्टिं दिवः परि स्रव द्युम्नं पृथिव्या अधि । सहो नः सोम पृत्सु धाः ॥९॥२॥ 535

सोमः पुनानो अर्षति सहस्रधारो अत्यविः । वायोरिंद्रस्य निष्कृतम् ॥१॥ 536

पवमानमवस्यवो विप्रमभि प्र गायत । सुष्वाणं देववीतये ॥२॥ 537

पवंते वाजसातये सोमाः सहस्रपाजसः । गृणाना देववीतये ॥३॥ 538

उत नो वाजसातये पवस्व बृहतीरिषः । द्युमदिंदो सुवीर्यम् ॥४॥ 539

अत्या हियाना न हेतृभिरसृग्रं वाजसातये । वि वारमव्यमाशवः ॥५॥ 540

ते नः सहस्रिणꣳ रयिं पवंतामा सुवीर्यम् । स्वाना देवास इंदवः ॥६॥ 541

वाश्रा अर्षंतींदवोऽभि वत्सं न मातरः । दधन्विरे गभस्त्योः ॥७॥ 542

जुष्ट इंद्राय मत्सरः पवमानः कनिक्रदत् । विश्वा अप द्विषो जहि ॥८॥ 543

अपघ्नंतो अराव्णः पवमानाः स्वर्दृशः । योनावृतस्य सीदत ॥९॥३॥ 544

सोमा असृग्रमिंदवः सुता ऋतस्य धारया । इंद्राय मधुमत्तमाः ॥१॥ 545

अभि विप्रा अनूषत गावो वत्सं न धेनवः । इंद्रꣳ सोमस्य पीतये ॥२॥ 546

मदच्युत्क्षेति सादने सिंधोरूर्मा विपश्चित् । सोमो गौरी अधि श्रितः ॥३॥ 547

दिवो नाभा विचक्षणोऽव्या वारे महीयते । सोमो यः सुक्रतुः कविः ॥४॥ 548

यः सोमः कलशेष्वा अंतः पवित्र आहितः। तमिंदुः परि षस्वजे ॥५॥

प्र वाचमिंदुरिष्यति समुद्रस्याधि विष्टपि। जिन्वन्कोशं मधुश्चुतम् ॥६॥

नित्यस्तोत्रो वनस्पतिर्धेनामंतः सबर्दुघाम्। हिन्वानो मानुषा युगा॥७॥

आ पवमान धारय रयिꣳ सहस्रवर्चसम्। अस्मे इंदो स्वाभुवम् ॥८॥

अभि प्रिया दिवः कविर्विप्रः स धारया सुतः। सोमो हिन्वे परावति॥९।४॥

उत्ते शुष्मास ईरते सिंधोरूर्मेरिव स्वनः। वाणस्य चोदया पविम् ॥१॥

प्रसवे त उदीरते तिस्रो वाचो मखस्युवः। यदव्य एषि सानवि ॥२॥

अव्या वारैः परि प्रियꣳ हरिꣳ हिन्वंत्यद्रिभिः। पवमानं मधुश्चुतम् ॥३॥

आ पवस्व मदिंतम पवित्रं धारया कवे। अर्कस्य योनिमासदम् ॥४॥

स पवस्व मदिंतम गोभिरंजानो अक्तुभिः। एंद्रस्य जठरं विश ॥५।५॥

अया वीती परि स्रव यस्त इंदो मदेष्वा। अवाहन्नवतीर्नव ॥१॥

पुरः सद्य इत्थाधिये दिवोदासाय शंबरम्। अध त्यं तुर्वशं यदुम् ॥२॥

परि नो अश्वमश्वविद्गोमदिंदो हिरण्यवत्। क्षरा सहस्रिणीरिषः॥३।६॥

अपघ्नन्पवते मृधोऽप सोमो अराव्णः। गच्छन्निंद्रस्य निष्कृतम् ॥१॥

महो नो राय आ भर पवमान जही मृधः। रास्वेंदो वीरवद्यशः॥२॥

न त्वा शतं च न ह्रुतो राधो दित्संतमा मिनन्। यत्पुनानो मखस्यसे॥३।७॥

अया पवस्व धारया यया सूर्यमरोचयः। हिन्वानो मानुषीरपः॥१॥

अयुक्त सूर एतशं पवमानो मनावधि। अंतरिक्षेण यातवे ॥२॥

उत त्या हरितो रथे सूरो अयुक्त यातवे। इंदुरिंद्र इति ब्रुवन् ॥३।८॥

अग्निं वो देवमग्निभिः सजोषा यजिष्ठं दूतमध्वरे कृणुध्वम्।

यो मर्त्येषु निध्रुविर्ऋतावा तपुर्मूर्धा घृतान्नः पावकः ॥१॥

प्रोथदश्वो न यवसे ऽविष्यन्यदा महः संवरणाद्व्यस्थात्।

आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनं कृष्णमस्ति ॥२॥

उद्यस्य ते नवजातस्य वृष्णो ऽग्ने चरंत्यजरा इधानाः।

अच्छा द्यामरुषो धूम एषि सं दूतो अग्न ईयसे हि देवान् ॥३।९॥

तमिंद्रं वाजयामसि महे वृत्राय हंतवे। स वृषा वृषभो भुवत् ॥१॥

इंद्रः स दामने कृत ओजिष्ठः स बले हितः। द्युम्नी श्लोकी स सोम्यः ॥२॥

गिरा वज्रो न संभृतः सबलो अनपच्युतः। ववक्ष उग्रो अस्तृतः ॥३।१०॥

अध्वर्यो अद्रिभिः सुतꣳ सोमं पवित्र आ नय। पुनाहींद्राय पातवे ॥१॥

तव त्य इंदो अंधसो देवा मधोर्व्याशत। पवमानस्य मरुतः ॥२॥

दिवः पीयूषमुत्तमꣳ सोममिंद्राय वज्रिणे। सुनोता मधुमत्तमम् ॥३।११॥

धर्त्ता दिवः पवते कृत्व्यो रसो दक्षो देवानामनुमाद्यो नृभिः।

हरिः सृजानो अत्यो न सत्वभिर्वृथा पाजाꣳसि कृणुषे नदीष्वा ॥१॥

शूरो न धत्त आयुधा गभस्त्योः स्वाः३ सिषासन्रथिरो गविष्टिषु।

इंद्रस्य शुष्ममीरयन्नपस्युभिरिंदुर्हिन्वानो अज्यते मनीषिभिः ॥२॥

इंद्रस्य सोम पवमान ऊर्मिणा तविष्यमाणो जठरेष्वा विश।

प्र नः पिन्व विद्युदभ्रेव रोदसी धिया नो वाजाꣳ उप माहि शश्वतः ॥३।१२॥ 579

यदिंद्र प्रागपागुदङ्न्यग्वा हूयसे नृभिः ।
सिमा पुरू नृषूतो अस्यानवे ऽसि प्रशर्ध तुर्वशे ॥१॥ 580

यद्वा रुमे रुशमे श्यावके कृप इंद्र मादयसे सचा ।
कण्वासस्त्वा स्तोमेभिर्ब्रह्मवाहस इंद्रा यच्छंत्या गहि ॥२।१३॥ 581

उभयꣳ शृणवच्च न इंद्रो अर्वागिदं वचः ।
सत्राच्या मघवांत्सोमपीतये धिया शविष्ठ आ गमत् ॥१॥ 582

तꣳ हि स्वराजं वृषभं तमोजसा धिषणे निष्टतक्षतुः ।
उतोपमानां प्रथमो नि षीदसि सोमकामꣳ हि ते मनः ॥२।१४॥ 583

पवस्व देव आयुषगिंद्रं गच्छतु ते मदः । वायुमा रोह धर्मणा ॥१॥ 584

पवमान नि तोशसे रयिꣳ सोम श्रवाय्यम् । इंदो समुद्रमा विश ॥२॥ 585

अपघ्नन्पवसे मृधः॰ ॥३।१५॥ 586

अभी नो वाजसातमम्॰ ॥१॥ 587

वयं ते अस्य राधसो वसोर्वसो पुरुस्पृहः ।
नि नेदिष्ठतमा इषः स्याम सुम्ने ते अध्रिगो ॥२॥ 588

परि स्य स्वानो अक्षरदिंदुरव्ये मदच्युतः ।
धारा य ऊर्ध्वो अध्वरे भ्राजा न याति गव्ययुः ॥३।१६॥ 589

पवस्व सोम महांत्समुद्रः पिता देवानां विश्वाभि धाम ॥१॥ 590

शुक्रः पवस्व देवेभ्यः सोम दिवे पृथिव्यै शं च प्रजाभ्यः ॥ २ ॥ 591

दिवो धर्तासि शुक्रः पीयूषः सत्ये विधर्मन्वाजी पवस्व ॥ ३ । १७ ॥ 592

प्रेष्ठं वो अतिथिँ स्तुषे मित्रमिव प्रियम् । अग्ने रथं न वेद्यम् ॥ १ ॥ 593

कविमिव प्रशँस्यं यं देवास इति द्विता । नि मर्त्येष्वादधुः ॥ २ ॥ 594

त्वं यविष्ठ दाशुषो नॄँः पाहि शृणुद्धी गिरः । रक्षा तोकमुत त्मना ॥ ३ । १८ ॥ 595

इंद्र नो गधि प्रिय सत्राजिदगोह्य ।
गिरिर्न विश्वतः पृथुः पतिर्दिवः ॥ १ ॥ 596

अभि हि सत्य सोमपा उभे बभूथ रोदसी ।
इंद्रासि सुन्वतो वृधः पतिर्दिवः ॥ २ ॥ 597

त्वँ हि शश्वतीनामिंद्र धर्ता पुरामसि ।
हंता दस्योर्मनोर्वृधः पतिर्दिवः ॥ ३ । १९ ॥ 598

पुरां भिंदुर्युवा कविरमितौजा अजायत ।
इंद्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥ १ ॥ 599

त्वं वलस्य गोमतो ऽपावरद्रिवो बिलम् ।
त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ॥ २ ॥ 600

इंद्रमीशानमोजसाभि स्तोमैरनूषत ।
सहस्रं यस्य रातय उत वा संति भूयसीः ॥ ३ । २० ॥ 601

॥ इति अर्धप्रपाठकः ॥

अक्रांत्समुद्रः प्रथमे विधर्मं जनयन्प्रजा भुवनस्य गोपाः ।
वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे स्वानो अद्रिः ॥ १ ॥ 602

मत्सि वायुमिष्टये राधसे नो मत्सि मित्रावरुणा पूयमानः ।
मत्सि शर्धो मारुतं मत्सि देवान्मत्सि द्यावापृथिवी देव सोम ॥ २ ॥ 603

महत्तत्सोमो महिषश्चकारापां यद्गर्भो ऽवृणीत देवान् ।
अदधादिंद्रे पवमान ओजो ऽजनयत्सूर्ये ज्योतिरिंदुः ॥ ३ । १ ॥ 604

एष देवो अमर्त्यः पर्णवीरिव दीयते । अभि द्रोणान्यासदम् ॥ १ ॥ 605

एष विप्रैरभिष्टुतो ऽपो देवो वि गाहते । दधद्रत्नानि दाशुषे ॥ २ ॥ 606

एष विश्वानि वार्या शूरो यन्निव सत्वभिः । पवमानः सिषासति ॥ ३ ॥ 607

एष देवो रथर्यति पवमानो दिशस्यति । आविष्कृणोति वग्वनुम् ॥ ४ ॥ 608

एष देवो विपन्युभिः पवमान ऋतायुभिः । हरिर्वाजाय मृज्यते ॥ ५ ॥ 609

एष देवो विपा कृतो ऽति ह्वरांसि धावति । पवमानो अदाभ्यः ॥ ६ ॥ 610

एष दिवं वि धावति तिरो रजांसि धारया । पवमानः कनिक्रदत् ॥ ७ ॥ 611

एष दिवं व्यासरत्तिरो रजांस्यस्तृतः । पवमानः स्वध्वरः ॥ ८ ॥ 612

एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः । हरिः पवित्रे अर्षति ॥ ९ ॥ 613

एष उ स्य पुरुव्रतो जज्ञानो जनयन्निषः । धारया पवते सुतः ॥ १० । २ ॥ 614

एष धिया यात्यण्व्या शूरो रथेभिराशुभिः । गच्छन्निंद्रस्य निष्कृतम् ॥ १ ॥ 615

एष पुरू धियायते बृहते देवतातये । यत्रामृतास आशत ॥ २ ॥ 616

एतं मृजंति मर्ज्यमुप द्रोणेष्वायवः । प्रचक्राणं महीरिषः ॥३॥ 617

एष हितो वि नीयते ऽन्तः शुंध्यावता पथा । यदी तुंजंति भूर्णयः ॥४॥ 618

एष रुक्मिभिरीयते वाजी शुभ्रेभिरंशुभिः । पतिः सिंधूनां भवन् ॥५॥ 619

एष शृंगाणि दोधुवच्छिशीते यूथ्योऽ३ वृषा । नृम्णा दधान ओजसा ॥६॥ 620

एष वसूनि पिब्दनः परुषा ययिवाँ अति । अव शादेषु गच्छति ॥७॥ 621

एतमु त्यं दश क्षिपो हरिं हिन्वंति यातवे । स्वायुधं मदिंतमम् ॥८।३॥ 622

एष उ स्य वृषा रथो ऽव्या वारेभिरव्यत । गच्छन्वाजं सहस्रिणम् ॥१॥ 623

एतं त्रितस्य योषणो हरिं हिन्वंत्यद्रिभिः । इंदुमिंद्राय पीतये ॥२॥ 624

एष स्य मानुषीष्वा श्येनो न विक्षु सीदति । गच्छं जारो न योषितम् ॥३॥ 625

एष स्य मद्यो रसो ऽव चष्टे दिवः शिशुः । य इंदुर्वारमाविशत् ॥४॥ 626

एष स्य पीतये सुतो हरिरर्षति धर्णसिः । क्रंदन्योनिमभि प्रियम् ॥५॥ 627

एतं त्यं हरितो दश मर्मृज्यंते अपस्युवः । याभिर्मदाय शुंभते ॥६।४॥ 628

एष वाजी हितो नृभिर्विश्वविन्मनसस्पतिः । अव्यं वारं वि धावति ॥१॥ 629

एष पवित्रे अक्षरत्सोमो देवेभ्यः सुतः । विश्वा धामान्याविशन् ॥२॥ 630

एष देवः शुभायते ऽधि योनावमर्त्यः । वृत्रहा देववीतमः ॥३॥ 631

एष वृषा कनिक्रदद्दशभिर्जामिभिर्यतः । अभि द्रोणानि धावति ॥४॥ 632

एष सूर्यमरोचयत्पवमानो अधि द्यवि । पवित्रे मत्सरो मदः ॥५॥ 633

एष सूर्येण हासते संवसानो विवस्वता । पतिर्वाचो अदाभ्यः ॥६।५॥ 634

एष कविरभिष्टुतः पवित्रे अधि तोशते । पुनानो घ्नन्नप द्विषः ॥ १ ॥ 635

एष इंद्राय वायवे स्वर्जित्परि षिच्यते । पवित्रे दक्षसाधनः ॥ २ ॥ 636

एष नृभिर्वि नीयते दिवो मूर्धा वृषा सुतः । सोमो वनेषु विश्ववित् ॥ ३ ॥ 637

एष गव्युरचिक्रदत्पवमानो हिरण्ययुः । इंदुः सत्राजिदस्तृतः ॥ ४ ॥ 638

एष शुष्म्यसिष्यददंतरिक्षे वृषा हरिः । पुनान इंदुरिंद्रमा ॥ ५ ॥ 639

एष शुष्म्यदाभ्यः सोमः पुनानो अर्षति । देवावीरघशंसहा ॥ ६ । ६ ॥ 640

स सुतः पीतये वृषा सोमः पवित्रे अर्षति । विघ्नन्रक्षांसि देवयुः ॥ १ ॥ 641

स पवित्रे विचक्षणो हरिरर्षति धर्णसिः । अभि योनिं कनिक्रदत् ॥ २ ॥ 642

स वाजी रोचनं दिवः पवमानो वि धावति । रक्षोहा वारमव्ययम् ॥ ३ ॥ 643

स त्रितस्याधि सानवि पवमानो अरोचयत् । जामिभिः सूर्यं सह ॥ ४ ॥ 644

स वृत्रहा वृषा सुतो वरिवोविददाभ्यः । सोमो वाजमिवासरत् ॥ ५ ॥ 645

स देवः कविनेषितो३ऽभि द्रोणानि धावति । इंदुरिंद्राय मंहयन् ॥ ६ । ७ ॥ 646

यः पावमानीरध्येत्यृषिभिः संभृतं रसम् ।
सर्वं स पूतमश्नाति स्वदितं मातरिश्वना ॥ १ ॥ 647

पावमानीर्यो अध्येत्यृषिभिः संभृतं रसम् ।
तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम् ॥ २ ॥ 648

पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः ।
ऋषिभिः संभृतो रसो ब्राह्मणेष्वमृतं हितम् ॥ ३ ॥ 649

पावमानीर्दधंतु न इमं लोकमथो अमुम् ।
कामांत्समर्धयंतु नो देवीर्देवैः समाहृताः ॥४॥ 650

येन देवाः पवित्रेणात्मानं पुनते सदा ।
तेन सहस्रधारेण पावमानीः पुनंतु नः ॥५॥ 651

पावमानीः स्वस्त्ययनीस्ताभिर्गछति नांदनम् ।
पुण्यांश्च भक्षान्भक्षयत्यमृतत्वं च गछति ॥६।८॥ 652

अगन्म महा नमसा यविष्ठं यो दीदाय समिद्धः स्वे दुरोणे।
चित्रभानुं रोदसी अंतरुर्वी स्वाहुतं विश्वतः प्रत्यंचम् ॥१॥ 653

स मह्ना विश्वा दुरितानि साह्वानग्निष्टवे दम आ जातवेदाः ।
स नो रक्षिषद्दुरितादवद्यादस्मान्गृणत उत नो मघोनः ॥२॥ 654

त्वं वरुण उत मित्रो अग्ने त्वां वर्धंति मतिभिर्वसिष्ठाः ।
त्वे वसु सुषणनानि संतु यूयं पात स्वस्तिभिः सदा नः ॥३।९॥ 655

महाँ इंद्रो य ओजसा पर्जन्यो वृष्टिमाँ इव। स्तोमैर्वत्सस्य वावृधे॥१॥ 656

कण्वा इंद्रं यदक्रत स्तोमैर्यज्ञस्य साधनम् । जामि ब्रुवत आयुधा॥२॥ 657

प्रजामृतस्य पिप्रतः प्र यद्भरंत वह्नयः। विप्रा ऋतस्य वाहसा ॥३।१०॥ 658

पवमानस्य जिघ्नतो हरेश्चंद्रा असृक्षत । जीरा अजिरशोचिषः ॥१॥ 659

पवमानो रथीतमः शुभ्रेभिः शुभ्रशस्तमः । हरिश्चंद्रो मरुद्गणः ॥२॥ 660

पवमान व्यश्नुहि रश्मिभिर्वाजसातमः।दधत्स्तोत्रे सुवीर्यम् ॥३।११॥ 661

परीतो षिंचता सुतꣳ सोमो य उत्तमꣳ हविः ।
दधन्वाꣳ यो नर्यो अप्स्वाᳲतरा सुषाव सोममद्रिभिः ॥ १ ॥ 662

नूनं पुनानो ऽविभिः परि स्रवादब्धः सुरभिंतरः ।
सुते चित्वाप्सु मदामो अंधसा श्रीणंतो गोभिरुत्तरम् ॥ २ ॥ 663

परि स्वानश्चक्षसे देवमादनः क्रतुरिंदुर्विचक्षणः ॥ ३ । १२ ॥ 664

असावि सोमो अरुषो वृषा हरी राजेव दस्मो अभि गा अचिक्रदत् ।
पुनानो वारमत्येष्यव्ययꣳ श्येनो न योनिं घृतवंतमासदत् ॥ १ ॥ 665

पर्जन्यः पिता महिषस्य पर्णिनो नाभा पृथिव्या गिरिषु क्षयं दधे ।
स्वसार आपो अभि गा उदासरंत्सं ग्रावभिर्वसते वीते अध्वरे ॥ २ ॥ 666

कविर्वेधस्या पर्येषि माहिनमत्यो न मृष्टो अभि वाजमर्षसि ।
अपसेधं दुरिता सोम नो मृड घृता वसानः परि यासि निर्णिजम् ॥ ३ । १३ ॥ 667

आयंत इव सूर्यं विश्वेदिंद्रस्य भक्षत ।
वसूनि जातो जनिमान्योजसा प्रति भागं न दीधिमः ॥ १ ॥ 668

अलर्षिरातिं वसुदामुप स्तुहि भद्रा इंद्रस्य रातयः ।
यो अस्य कामं विधतो न रोषति मनो दानाय चोदयन् ॥ २ । १४ ॥ 669

यत इंद्र भयामहे ततो नो अभयं कृधि ।
मघवं छग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि ॥ १ ॥ 670

त्वꣳ हि राधसस्पते राधसो महः क्षयस्यासि विधर्ता । 671

तं त्वा वयं मघवन्निंद्र गिर्वणः सुतावंतो हवामहे ॥२।१५॥ 671

त्वं सोमासि धारयुर्मन्द्र ओजिष्ठो अध्वरे । पवस्व मंहयद्रयिः ॥१॥ 672

त्वं सुतो मदिंतमो दधन्वान्मत्सरिंतमः । इंदुः सत्राजिदस्तृतः ॥२॥ 673

त्वं सुष्वाणो अद्रिभिरभ्यर्ष कनिक्रदत् । द्युमंतं शुष्ममा भर ॥३।१६॥ 674

पवस्व देववीतय इंदो धाराभिरोजसा ।
आ कलशं मधुमांत्सोम नः सदः ॥१॥ 675

तव द्रप्सा उदप्रुत इंद्रं मदाय वावृधुः ।
त्वां देवासो अमृताय कं पपुः ॥२॥ 676

आ नः सुतास इंदवः पुनाना धावता रयिम् ।
वृष्टिद्यावो रीत्यापः स्वर्विदः ॥३।१७॥ 677

परि त्यं हर्यतं हरिं बभ्रुं पुनंति वारेण ।
यो देवान्विश्वाँ इत्परि मदेन सह गच्छति ॥१॥ 678

द्विर्यं पंच स्वयशसं सखायो अद्रिसंहतम् ।
प्रियमिंद्रस्य काम्यं प्रस्नापयंत ऊर्मयः ॥२॥ 679

इंद्राय सोम पातवे वृत्रघ्ने परि षिच्यसे ।
नरे च दक्षिणावते वीराय सदनासदे ॥३।१८॥ 680

पवस्व सोम महे दक्षायाश्वो न निक्तो वाजी धनाय ॥१॥ 681

प्र ते सोतारो रसं मदाय पुनंति सोमं महे द्युम्नाय ॥२॥ 682

शिंशुं जज्ञानं हरिं मृजंति पवित्रे सोमं देवेभ्य इंदुम् ॥३।१९॥ 683

उपो षु जातमप्तुरं गोभिर्भंगं परिष्कृतम्। इंदुं देवा अयासिषुः ॥१॥ 684

तमिद्वर्धंतु नो गिरो वत्सं संशिश्वरीरिव। य इंद्रस्य हृदंसनिः ॥२॥ 685

अर्षा नः सोम शं गवे धुक्षस्व पिप्युषीमिषम्। वर्धा समुद्रमुक्थ्य ॥३।२०॥ 686

आ घा ये अग्निमिंधते स्तृणंति बर्हिरानुषक्। येषामिंद्रो युवा सखा ॥१॥ 687

बृहन्निदिध्म एषां भूरि शस्त्रं पृथुः स्वरुः। येषामिंद्रो युवा सखा ॥२॥ 688

अयुद्ध इद्युधा वृतं शूर आजति सत्वभिः। येषामिंद्रो युवा सखा ॥३।२१॥ 689

य एक इद्विदयते वसु मर्ताय दाशुषे।

ईशानो अप्रतिष्कुत इंद्रो अंग ॥१॥ 690

यश्चिद्धि त्वा बहुभ्य आ सुतावां आविवासति।

उग्रं तत्पत्यते शव इंद्रो अंग ॥२॥ 691

कदा मर्तमराधसं पदा क्षुंपमिव स्फुरत्।

कदा नः शुश्रवद्गिर इंद्रो अंग ॥३।२२॥ 692

गायंति त्वा गायत्रिणोऽर्चंत्यर्कमर्किणः।

ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥१॥ 693

यत्सानोः सान्वारुहो भूर्यस्पष्ट कर्त्वम्।

तदिंद्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥२॥ 694

युंक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा। 695

५ अथा न इंद्र सोमपा गिरामुपश्रुतिं चर ॥ ३ । २३ ॥

॥ इति पंचमः प्रपाठकः ॥

सुषमिद्धो न आ वह देवाँ अग्ने हविष्मते । होतः पावक यक्षि च ॥ १ ॥ 696

मधुमंतं तनूनपाद्यज्ञं देवेषु नः कवे । अद्या कृणुह्यूतये ॥ २ ॥ 697

नराशंसमिह प्रियमस्मिन्यज्ञ उप ह्वये । मधुजिह्वं हविष्कृतम् ॥ ३ ॥ 698

अग्ने सुखतमे रथे देवाँ ईडित आ वह । असि होता मनुर्हितः ॥ ४ । १ ॥ 699

यदद्य सूर उदिते ऽनागा मित्रो अर्यमा । सुवाति सविता भगः ॥ १ ॥ 700

सुप्रावीरस्तु स क्षयः प्र नु यामंत्सुदानवः । ये नो अंहो ऽतिपिप्रति ॥ २ ॥ 701

उत स्वराजो अदितिरदब्धस्य व्रतस्य ये । महो राजान ईशते ॥ ३ । २ ॥ 702

उ त्वा मंदंतु सोमाः कृणुष्व राधो अद्रिवः । अव ब्रह्मद्विषो जहि ॥ १ ॥ 703

पदा पणीनराधसो नि बाधस्व महाँ असि । न हि त्वा कश्च न प्रति ॥ २ ॥ 704

त्वमीशिषे सुतानामिंद्र त्वमसुतानम् । त्वं राजा जनानाम् ॥ ३ । ३ ॥ 705

आ जागृविर्विप्र ऋतं मतीनां सोमः पुनानो असदच्चमूषु ।
सपंति यं मिथुनासो निकामा अध्वर्यवो रथिरासः सुहस्ताः ॥ १ ॥ 706

स पुनान उप सूरे दधान ओभे अप्रा रोदसी वी ष आवः ।
प्रिया चिद्यस्य प्रियसास ऊती सतो धनं कारिणे न प्र यंसत् ॥ २ ॥ 707

स वर्धिता वर्धनः पूयमानः सोमो मीढ्वाँ अभि नो ज्योतिषावीत् । 708

यत्र नः पूर्वे पितरः पदज्ञाः स्वर्विदो अभि गा अद्रिमिष्णन् ॥३।४॥ 708

मा चिदन्यद्वि शंसत सखायो मा रिषण्यत ।
इंद्रमित्स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत ॥१॥ 709

अवक्रक्षिणं वृषभं यथा जुवं गां न चर्षणीसहम् ।
विद्वेषणं संवननमुभयंकरं मंहिष्ठमुभयाविनम् ॥२।५॥ 710

उदु त्ये मधुमत्तमा गिर स्तोमास ईरते ।
सत्राजितो धनसा अक्षितोतयो वाजयंतो रथा इव ॥१॥ 711

कण्वा इव भृगवः सूर्या इव विश्वमिद्धीतमाशत ।
इंद्रं स्तोमेभिर्महयंत आयवः प्रियमेधासो अस्वरन् ॥२।६॥ 712

पर्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः ।
द्विषस्तरध्या ऋणया न ईरसे ॥१॥ 713

अजीजनो हि पवमान सूर्यं विधारे शक्मना पयः ।
गोजीरया रंहमाणः पुरंध्या ॥२॥ 714

अनु हि त्वा सुतं सोम मदामसि° ॥३।७॥ 715

परि प्र धन्व° ॥१॥ 716

एवामृताय महे क्षयाय स शुक्रो अर्ष दिव्यः पीयूषः ॥२॥ 717

इंद्रस्ते सोम सुतस्य पेयात्क्रत्वे दक्षाय विश्वे च देवाः ॥३।८॥ 718

सूर्यस्येव रश्मयो द्रावयित्नवो मत्सरासः प्रसुतः साकमीरते । 719

तंतुं ततं परि सर्गास आशवो नेंद्रादृते पवते धाम किं चन ॥१॥ 719

उपो मतिः पृच्यते सिच्यते मधु मंद्राजनी चोदते अंतरासनि ।

पवमानः संतनिः सुन्वतामिव मधुमां द्रप्सः परि वारमर्षति ॥२॥ 720

उक्षा मिमेति प्रति यंति धेनवो देवस्य देवीरुप यंति निष्कृतम् ।

अत्यक्रमीदर्जुनं वारमव्ययमत्कं न निक्तं परि सोमो अव्यत ॥३।१॥ 721

अग्निं नरो दीधितिभिररण्योर्हस्तच्युतं जनयत प्रशस्तम् ।

दूरेदृशं गृहपतिमथव्युम् ॥१॥ 722

तमग्निमस्ते वसवो न्यृण्वंत्सुप्रतिचक्षमवसे कुतश्चित् ।

दक्षाय्यो यो दम आस नित्यः ॥२॥ 723

प्रेद्धो अग्ने दीदिहि पुरो नो ऽजस्रया सूर्म्या यविष्ठ ।

त्वांँ शश्वंत उप यंति वाजाः ॥३।१०॥ 724

आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयंत्स्वः ॥१॥ 725

अंतश्चरति रोचनास्य प्राणादपानती । व्यख्यन्महिषो दिवम् ॥२॥ 726

त्रिंँशद्धाम वि राजति वाक्पतंगाय धीयते । प्रति वस्तोरह द्युभिः ॥३।११॥ 727

॥ इति अर्धप्रपाठकः ॥

उपप्रयंतो अध्वरं मंत्रं वोचेमाग्नये । आरे अस्मे च शृण्वते ॥१॥ 728

यः स्नीहितीषु पूर्व्यः संजग्मानासु कृष्टिषु । अरक्षद्दाशुषे गयम् ॥२॥ 729

स नो वेदो अमात्यमग्नी रक्षतु शंतमः । उतास्मान्पात्वंहसः ॥ ३ ॥

उत ब्रुवंतु जंतव उदग्निर्वृत्रहाजनि । धनंजयो रणेरणे ॥ ४ । १ ॥

अग्ने युंक्ष्वा हि ये तवाश्वासो देव साधवः । अरं वहंत्याशवः ॥ १ ॥

अच्छा नो याह्या वहाभि प्रयांसि वीतये । आ देवांत्सोमपीतये ॥ २ ॥

उदग्ने भारत द्युमदजस्रेण दविद्युतत् । शोचा वि भाह्यजर ॥ ३ । २ ॥

प्र सुन्वानायांधसो मर्तो न वष्ट तद्वचः ।

अप श्वानमराधसं हता मखं न भृगवः ॥ १ ॥

आ जामिरत्के अव्यत भुजे न पुत्र ओण्योः ।

सरज्जारो न योषणां वरो न योनिमासदम् ॥ २ ॥

स वीरो दक्षसाधनो वि यस्तस्तंभ रोदसी ।

हरिः पवित्रे अव्यत वेधा न योनिमासदम् ॥ ३ । ३ ॥

अभ्रातृव्यो अना त्वमनापिरिंद्र जनुषा सनादसि ।

युधेदापित्वमिच्छसे ॥ १ ॥

न की रेवंतं सख्याय विंदसे पीयंति ते सुराश्वः ।

यदा कृणोषि नदनुं समूहस्यादित्पितेव हूयसे ॥ २ । ४ ॥

आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये ।

ब्रह्मयुजो हरय इंद्र केशिनो वहंतु सोमपीतये ॥ १ ॥

आ त्वा रथे हिरण्यये हरी मयूरशेप्या ।

शितिपृष्ठा वहतां मध्वो अंधसो विवक्षणस्य पीतये ॥२॥ 741

पिबा त्वा३स्य गिर्वणः सुतस्य पूर्वपा इव।

परिष्कृतस्य रसिन इयमासुतिश्चारुर्मदाय पत्यते ॥३।५॥ 742

आ सोता परि षिंचताश्वं न स्तोममप्तुरꣳ रजस्तुरम्।

वनप्रक्षमुदप्रुतम् ॥१॥ 743

सहस्रधारं वृषभं पयोदुहं प्रियं देवाय जन्मने।

ऋतेन य ऋतजातो विवावृधे राजा देव ऋतं बृहत् ॥२।६॥ 744

अग्निर्वृत्राणि जंघनद्द्रविणस्युर्विपन्यया। समिद्धः शुक्र आहुतः ॥१॥ 745

गर्भे मातुः पितुष्पिता विदिद्युतानो अक्षरे। सीदन्नृतस्य योनिमा ॥२॥ 746

ब्रह्म प्रजावदा भर जातवेदो विचर्षणे। अग्ने यद्दीदयद्दिवि ॥३।७॥ 747

अस्य प्रेषा हेमना पूयमानो देवो देवेभिः समपृक्त रसम्।

सुतः पवित्रं पर्येति रेभन्मितेव सद्म पशुमंति होता ॥१॥ 748

भद्रा वस्त्रा समन्या३ वसानो महान्कविर्निवचनानि शꣳसन्।

आ वच्यस्व चम्वोः पूयमानो विचक्षणो जागृविर्देववीतौ ॥२॥ 749

समु प्रियो मृज्यते सानो अव्ये यशस्तरो यशसां क्षैतो अस्मे।

अभि स्वर धन्वा पूयमानो यूयं पात स्वस्तिभिः सदा नः ॥३।८॥ 750

एतो न्विंद्रꣳ स्तवाम शुद्धꣳ शुद्धेन साम्ना।

शुद्धैरुक्थैर्वावृध्वाꣳसꣳ शुद्धैराशीर्वान्ममत्तु ॥१॥ 751

इंद्र शुद्धो न आ गहि शुद्धः शुद्धाभिरूतिभिः ।
शुद्धो रयिं नि धारय शुद्धो ममद्धि सोम्य ॥ २ ॥ 752
इंद्र शुद्धो हि नो रयिꣳ शुद्धो रत्नानि दाशुषे ।
शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजꣳ सिषाससि ॥ ३ । ६ ॥ 753
अग्ने स्तोमं मनामहे सिध्रमद्य दिविस्पृशः । देवस्य द्रविणस्यवः ॥ १ ॥ 754
अग्निर्जुषत नो गिरो होता यो मानुषेष्वा । स यक्षद्दैव्यं जनम् ॥ २ ॥ 755
त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः । त्वया यज्ञं वि तन्वते ॥ ३ । १० ॥ 756
अभि त्रिपृष्ठं वृषणं वयोधामंगोषिणमवावशंत वाणीः ।
वना वसानो वरुणो न सिंधुर्वि रत्नधा दयते वार्याणि ॥ १ ॥ 757
शूरग्रामः सर्ववीरः सहावान्जेता पवस्व सनिता धनानि ।
तिग्मायुधः क्षिप्रधन्वा समत्स्वषाढः साह्वान्पृतनासु शत्रून् ॥ २ ॥ 758
उरुगव्यूतिरभयानि कृण्वंत्समीचीने आ पवस्वा पुरंधी ।
अपः सिषासन्नुषसः स्वा३र्गाः सं चिक्रदो महो अस्मभ्यं वाजान् ॥ ३ । ११ ॥ 759
त्वमिंद्र यशा अस्यृजीषी शवसस्पतिः ।
त्वं वृत्राणि हꣳस्यप्रतीन्येक इत्पुर्वनुत्तश्चर्षणीधृतिः ॥ १ ॥ 760
तमु त्वा नूनमसुर प्रचेतसꣳ राधो भागमिवेमहे ।
महीव कृत्तिः शरणा त इंद्र प्र ते सुम्ना नो अश्नवन् ॥ २ । १२ ॥ 761
यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम् । 762

अस्य यज्ञस्य सुक्रतुम् ॥१॥ 762

अपां नपातं सुभगं सुदीदितिमग्निमु श्रेष्ठशोचिषम् ।

स नो मित्रस्य वरुणस्य सो अपामा सुम्नं यक्षते दिवि ॥२।१३॥ 763

यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः । स यंता शश्वतीरिषः ॥१॥ 764

न किरस्य सहंत्य पर्येता कयस्य चित् । वाजो अस्ति श्रवाय्यः ॥२॥ 765

स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता । विप्रेभिरस्तु सनिता ॥३।१४॥ 766

साकमुक्षो मर्जयंत स्वसारो दश धीरस्य धीतयो धनुत्रीः ।

हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणं ननक्षे अत्यो न वाजी ॥१॥ 767

सं मातृभिर्न शिशुर्वावशानो वृषा दधन्वे पुरुवारो अद्भिः ।

मर्यो न योषामभि निष्कृतं यंत्सं गच्छते कलश उस्रियाभिः ॥२॥ 768

उत प्र पिप्य ऊधरघ्न्याया इंदुर्धाराभिः सचते सुमेधाः ।

मूर्धानं गावः पयसा चमूष्वभि श्रीणंति वसुभिर्न निक्तैः ॥३।१५॥ 769

पिबा सुतस्य रसिनो मत्स्वा न इंद्र गोमतः ।

आपिर्नो बोधि सधमाद्ये वृधे३ऽस्माँ अवंतु ते धियः ॥१॥ 770

भूयाम ते सुमतौ वाजिनो वयं मा न स्तरभिमातये ।

अस्माँ चित्राभिरवतादभिष्टिभिरा नः सुम्नेषु यामय ॥२।१६॥ 771

त्रिरस्मै सप्त धेनवो दुदुह्रिरे सत्यामाशिरं परमे व्योमनि ।

चत्वार्यन्या भुवनानि निर्णिजे चारूणि चक्रे यदृतैरवर्धत ॥१॥ 772

स भक्षमाणो अमृतस्य चारुण उभे द्यावा काव्येना वि शश्रथे ।
तेजिष्ठा अपो मंहना परि व्यत यदी देवस्य श्रवसा सदो विदुः ॥२॥ 773
ते अस्य संतु केतवो ऽ मृत्यवो ऽ दाभ्यासो जनुषी उभे अनु ।
येभिर्नृम्णा च देव्या च पुनत आदिद्राजानं मनना अगृभ्णात ॥ ३ । १७॥ 774
अभि वायुं वीत्यर्षा गृणानो३ ऽ भि मित्रावरुणा पूयमानः ।
अभी नरं धीजवनं रथेष्ठामभींद्रं वृषणं वज्रबाहुम् ॥ १ ॥ 775
अभि वस्त्रा सुवसनान्यर्षाभि धेनूः सुदुघाः पूयमानः ।
अभि चंद्रा भर्तवे नो हिरण्याभ्यश्वान्रथिनो देव सोम ॥ २ ॥ 776
अभी नो अर्ष दिव्या वसून्यभि विश्वा पार्थिवा पूयमानः ।
अभि येन द्रविणमश्नवामाभ्यार्षेयं जमदग्निवन्नः ॥ ३ । १८ ॥ 777
यज्जायथा अपूर्व्य मघवन्वृत्रहत्याय ।
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतो दिवम् ॥१॥ 778
तत्ते यज्ञो अजायत तदर्क उत हस्कृतिः ।
तद्विश्वमभिभूरसि यज्जातं यच्च जंत्वम् ॥ २ ॥ 779
आमासु पक्कमैरय आ सूर्यं रोहयो दिवि ।
घर्मं न सामं तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ॥ ३ । १९ ॥ 780
मत्स्यपायि ते महः पात्रस्येव हरिवो मत्सरो मदः ।
वृषा ते वृष्ण इंदुर्वाजी सहस्रसातमः ॥ १ ॥ 781

आ नस्ते गंतु मत्सरो वृषा मदो वरेण्यः ।
सहावाँ इंद्र सानसिः पृतनाषाडमर्त्यः ॥ २ ॥ 782
त्वं हि शूरः सनिता चोदयो मनुषो रथम् ।
सहावान्दस्युमव्रतमोषः पात्रं न शोचिषा ॥ ३ । २० ॥ 783

॥ इति द्वितीयो ऽर्धप्रपाठकः ॥

पवस्व वृष्टिमा सु नो ऽपामूर्मिं दिवस्परि । अयक्ष्मा बृहतीरिषः ॥ १ ॥ 784
तया पवस्व धारया यया गाव इहागमन् । जन्यास उप नो गृहम् ॥ २ ॥ 785
घृतं पवस्व धारया यज्ञेषु देववीतमः । अस्मभ्यं वृष्टिमा पव ॥ ३ ॥ 786
स न ऊर्जे व्या३व्ययं पवित्रं धाव धारया । देवासः शृणवन्हि कम् ॥ ४ ॥ 787
पवमानो असिष्यदद्रक्षांस्यपजंघनत् । प्रत्नवद्रोचयन्रुचः ॥ ५ । १ ॥ 788
प्रत्यस्मै पिपीषते विश्वानि विदुषे भर ।
अरंगमाय जग्मये ऽपश्चादध्वने नरः ॥ १ ॥ Nânadam 789
एमेनं प्रत्येतन सोमेभिः सोमपातमम् ।
अमत्रेभिर्ऋजीषिणमिंद्रं सुतेभिरिंदुभिः ॥ २ ॥ 790
यदी सुतेभिरिंदुभिः सोमेभिः प्रतिभूषथ ।
वेदा विश्वस्य मेधिरो धृषत्तंतमिदेषते ॥ ३ ॥ 791
अस्माअस्मा इदंधसो ऽध्वर्यो प्र भरा सुतम् । 792

कुवित्समस्य जेन्यस्य शर्धतो ऽभिशस्तेरवस्वरत् ॥४।२॥ 792

बभ्रवे नु स्वतवसे ऽरुणाय दिविस्पृशे । सोमाय गाथमर्चत ॥१॥ 793

हस्तच्युतेभिरद्रिभिः सुतꣳ सोमं पुनीतन । मधावा धावता मधु ॥२॥ 794

नमसेदुप सीदत दध्नेदभि श्रीणीतन । इंदुमिंद्रे दधातन ॥३॥ 795

अमित्रहा विचर्षणिः पवस्व सोम शं गवे । देवेभ्यो अनुकामकृत् ॥४॥ 796

इंद्राय सोम पातवे मदाय परि षिच्यसे । मनश्चिन्मनसस्पतिः ॥५॥ 797

पवमान सुवीर्यꣳ रयिꣳ सोम रिरीहि णः । इंदविंद्रेण नो युजा ॥६।३॥ 798

उद्घेदभि श्रुतामघं वृषभं नर्यापसम् । अस्तारमेषि सूर्य ॥१॥ 799

नव यो नवतिं पुरो बिभेद बाह्वोजसा । अहिं च वृत्रहावधीत् ॥२॥ 800

स न इंद्रः शिवः सखाश्वावद्गोमद्यवमत् । उरुधारेव दोहते ॥३।४॥ 801

विभ्राड्बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् ।
वातजूतो यो अभिरक्षति त्मना प्रजाः पिपर्ति बहुधा वि राजति ॥१॥ 802

विभ्राड्बृहत्सुभृतं वाजसातमं धर्मं दिवो धरुणे सत्यमर्पितम् ।
अमित्रहा वृत्रहा दस्युहंतमं ज्योतिर्जज्ञे असुरहा सपत्नहा ॥२॥ 803

इदꣳ श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं विश्वजिद्धनजिदुच्यते बृहत् ।
विश्वभ्राड्भ्राजो महि सूर्यो दृश उरु पप्रथे सह ओजो अच्युतम् ॥३।५॥ 804

इंद्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥१॥ 805

मा नो अज्ञाता वृजना दुराध्यो३ माशिवासो ऽव क्रमुः ।
त्वया वयं प्रवतः शश्वतीरपो ऽति शूर तरामसि ॥२।६॥ 806

अद्याद्या श्वःश्व इंद्र त्रास्व परे च नः ।
विश्वा च नो जरितृंत्सत्पते अहा दिवा नक्तं च रक्षिषः ॥१॥ 807

प्रभंगी शूरो मघवा तुवीमघः संमिश्लो वीर्याय कं ।
उभा ते बाहू वृषणा शतक्रतो नि या वज्रं मिमिक्षतुः ॥२।७॥ 808

जनीयंतो न्वग्रवः पुत्रीयंतः सुदानवः । सरस्वंतꣳ हवामहे ॥१।८॥ 809

उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा। सरस्वती स्तोम्या भूत् ॥१।९॥ 810

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥१॥ 811

सोमानाꣳ स्वरणं० ॥२॥ 812

अग्न आयूꣳषि पवसे० ॥३।१०॥ 813

ता नः शक्तं पार्थिवस्य० ॥१॥ 814

ऋतमृतेन सपंतेषिरं दक्षमाशाते । अद्रुहा देवौ वर्धेते ॥२॥ 815

वृष्टिद्यावा रीत्यापेषस्पती दानुमत्याः । बृहंतं गर्तमाशाते ॥३।११॥ 816

युंजंति ब्रध्नमरुषं चरंतं परि तस्थुषः । रोचंते रोचना दिवि ॥१॥ 817

युंजंत्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा ॥२॥ 818

केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥३।१२॥ 819

अयꣳ सोम इंद्र तुभ्यꣳ सुन्वे तुभ्यं पवते त्वमस्य पाहि । 820

त्वꣳ ह्य३ं चकृषे त्वं ववृष इंदुं मदाय युज्याय सोमम् ॥१॥ 820

स ईꣳ रथो न भूरिषाडयोजि महः पुरूणि सातये वसूनि ।
आदीं विश्वा नहुष्याणि जाता स्वर्षाता वन ऊर्ध्वा नवंत ॥२॥ 821

शुष्मी शर्धो न मारुतं पवस्वानभिशस्ता दिव्या यथा विट् ।
आपो न मक्षू सुमतिर्भवा नः सहस्राप्साः पृतनाषाड् यज्ञः ॥३।१३॥ 822

त्वमग्ने यज्ञानाꣳ होता विश्वेषाꣳ हितः । देवेभिर्मानुषे जने ॥१॥ 823

स नो मंद्राभिरध्वरे जिह्वाभिर्यजा महः । आ देवान्वक्षि यक्षि च ॥२॥ 824

वेत्था हि वेधो अध्वनः पथश्च देवांजसा । अग्ने यज्ञेषु सुक्रतो ॥३।१४॥ 825

होता देवो अमर्त्यः पुरस्तादेति मायया । विदथानि प्रचोदयन् ॥१॥ 826

वाजी वाजेषु धीयते ऽध्वरेषु प्र णीयते । विप्रो यज्ञस्य साधनः ॥२॥ 827

धिया चक्रे वरेण्यो भूतानां गर्भमा दधे । दक्षस्य पितरं तना ॥३।१५॥ 828

आ सुते सिंचत श्रियꣳ रोदस्योरभिश्रियम् । रसा दधीत वृषभम् ॥१॥ 829

ते जानत स्वमोक्या३ꣳ सं वत्सासो न मातृभिः । मिथो नसंत जामिभिः ॥२॥ 830

उप स्रक्वेषु बप्सतः कृण्वते धरुणं दिवि । इंद्रे अग्ना नमः स्वः ॥३।१६॥ 831

तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो नि रिणाति शत्रूननु यं विश्वे मदंत्यूमाः ॥१॥ 832

वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसं दधाति ।
अव्यनच्च व्यनच्च सस्नि सं ते नवंत प्रभृता मदेषु ॥२॥ 833

त्वे क्रतुमपि वृंजंति विश्वे द्विर्यदेते त्रिर्भवंत्यूमाः ।
स्वादोः स्वादीयः स्वादुना सृजा समदः सु मधु मधुनाभि योधीः ॥३।१७॥ 834

त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृंपत्सोममपिबद्विष्णुना सुतं यथावशम् ।
स ईं ममाद महि कर्म कर्तवे महामुरुं सैनं सश्चद्देवो देवं सत्य इंदुः सत्यमिंद्रम् ॥ १ ॥ 835

साकं जातः क्रतुना साकमोजसा ववक्षिथ साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणिः ।
दाता राध स्तुवते काम्यं वसु प्रचेतन सैनं सश्चद्देवो देवं सत्य इंदुः सत्यमिंद्रम् ॥ २ ॥ 836

अध त्विषीमाँ अभ्योजसा कृविं युधाभवदा रोदसी अपृणदस्य मज्मना प्र वावृधे ।
अधत्तान्यं जठरे प्रेमरिच्यत प्र चेतय सैनं सश्चद्देवो देवं सत्य इंदुः सत्यमिंद्रम् ॥ ३ । १८ ॥ 837

॥ इति षष्ठः प्रपाठकः ॥

अभि प्र गोपतिं गिरेंद्रमर्च यथा विदे । सूनुं सत्यस्य सत्पतिम् ॥ १ ॥ 838
आ हरयः ससृज्रिरे ऽरुषीरधि बर्हिषि । यत्राभि संनवामहे ॥ २ ॥ 839

इंद्राय गाव आशिरं दुदुह्रे वज्रिणे मधु । यत्सीमुपह्वरे विदत् ॥३।१॥ 840

आ नो विश्वासु हव्यमिंद्रः समत्सु भूषत ।

उप ब्रह्माणि सवनानि वृत्रहन्परमज्या ऋचीषम ॥१॥ 841

त्वं दाता प्रथमो राधसामस्यसि सत्य ईशानकृत् ।

तुविद्युम्नस्य युज्या वृणीमहे पुत्रस्य शवसो महः ॥२।२॥ 842

प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यं महो गाहाद्दिव आ निरधुक्षत ।

इंद्रमभि जायमानः समस्वरन् ॥१॥ 843

आदीं के चित्पश्यमानास आप्यं वसुरुचो दिव्या अभ्यनूषत ।

दिवो न वारः सविता व्यूर्णुते ॥२॥ 844

अध यदिमे पवमान रोदसी इमा च विश्वा भुवनाभि मज्मना ।

यूथे न निष्ठा वृषभो वि राजसि ॥३।३॥ 845

इममू षु त्वमस्माकं सनिं गायत्रं नव्यांसम् । अग्ने देवेषु प्र वोचः ॥१॥ 846

विभक्तासि चित्रभानो सिंधोरूर्मा उपाक आ । सद्यो दाशुषे क्षरसि ॥२॥ 847

आ नो भज परमेष्वा वाजेषु मध्यमेषु । शिक्षा वस्वो अंतमस्य ॥३।४॥ 848

अहमिद्धि पितुष्परि मेधामृतस्य जग्रह । अहं सूर्य इवाजनि ॥१॥ 849

अहं प्रत्नेन जन्मना गिरः शुंभामि कण्ववत् । येनेंद्रः शुष्ममिद्दधे ॥२॥ 850

ये त्वामिंद्र न तुष्टुवुरृषयो ये च तुष्टुवुः । ममेद्वर्धस्व सुष्टुतः ॥३।५॥ 851

अग्ने विश्वेभिरग्निभिर्जोषि ब्रह्म सहस्कृत ।

ये देवत्रा य आयुषु तेभिर्नो महया गिरः ॥१॥ 852

प्र स विश्वेभिरग्निभिरग्निः स यस्य वाजिनः ।

तनये तोके अस्मदा सम्यङ्वाजैः परीवृतः ॥२॥ 853

त्वं नो अग्ने अग्निभिर्ब्रह्म यज्ञं च वर्धय ।

त्वं नो देवतातये रायो दानाय चोदय ॥३।६॥ 854

त्वे सोम प्रथमा वृक्तबर्हिषो महे वाजाय श्रवसे धियं दधुः ।

स त्वं नो वीर वीर्याय चोदय ॥१॥ 855

अभ्यभि हि श्रवसा ततर्दिथोत्सं न कं चिज्जनपानमक्षितम् ।

शर्याभिर्न भरमाणो गभस्त्योः ॥२॥ 856

अजीजनो अमृत मर्त्याय कमृतस्य धर्मन्नमृतस्य चारुणः ।

सदासरो वाजमच्छा सनिष्यदत् ॥३।७॥ 857

एन्दुमिन्द्राय सिंचत पिबाति सोम्यं मधु ।

प्र राधाꣳसि चोदयते महित्वना ॥१॥ 858

उपो हरीणां पतिꣳ राधः पृंचंतमब्रवम् ।

नूनꣳ श्रुधि स्तुवतो अश्व्यस्य ॥२॥ 859

न घ्याꣳग पुरा च न जज्ञे वीरतरस्त्वत् ।

न की राया नैवथा न भंदना ॥३।८॥ 860

नदं व ओदतीनां नदं योयुवतीनाम् । 861

पतिं वो अघ्न्यानां धेनूनामिषुध्यसि ॥१।९॥ 861

देवो वो द्रविणोदाः पूर्णां विवष्ट्वासिचम्।

उद्वा सिंचध्वमुप वा पृणध्वमादिद्वो देव ओहते ॥१॥ 862

तꣳ होतारमध्वरस्य प्रचेतसं वह्निं देवा अकृण्वत।

दधाति रत्नं विधते सुवीर्यमग्निर्जनाय दाशुषे ॥२।१०॥ 863

अदर्शि गातुवित्तमो यस्मिन्व्रतान्यादधुः।

उपो षु जातमार्यस्य वर्धनमग्निं नक्षंतु नो गिरः ॥१॥ 864

यस्माद्रेजंत कृष्टयश्चर्कृत्यानि कृण्वतः।

सहस्रसां मेधसाताविव त्मनाग्निं धीभिर्नमस्यत ॥२॥ 865

प्र दैवोदासो अग्निः॰ ॥३।११॥ 866

अग्न आयूꣳषि पवसे॰ ॥१॥ 867

अग्निर्ऋषिः पवमानः पांचजन्यः पुरोहितः। तमीमहे महागयम् ॥२॥ 868

अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम्। दधद्रयिं मयि पोषम् ॥३।१२॥ 869

अग्ने पावक रोचिषा मंद्रया देव जिह्वया। आ देवान्वक्षि यक्षि च ॥१॥ 870

तं त्वा घृतस्नवीमहे चित्रभानो स्वर्दृशम्। देवाꣳ आ वीतये वह ॥२॥ 871

वीतिहोत्रं त्वा कवे द्युमंतꣳ समिधीमहि। अग्ने बृहंतमध्वरे ॥३।१३॥ 872

अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि। विश्वासु धीषु वंद्य ॥१॥ 873

आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम्। विश्वासु पृत्सु दुष्टरम् ॥२॥ 874

आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसम् । मार्डीकं धेहि जीवसे ॥३।१४॥ 875

अग्निꣳ हिन्वंतु नो धियः सप्तिमाशुमिवाजिषु । तेन जेष्म धनंधनम् ॥१॥ 876

यया गा आकरामहै सेनयाग्ने तवोत्या । तां नो हिन्व मघत्तये ॥२॥ 877

आग्ने स्थूरꣳ रयिं भर पृथुं गोमंतमश्विनम् । अङ्धि खं वर्तया पविम् ॥३॥ 878

अग्ने नक्षत्रमजरमा सूर्यꣳ रोहयो दिवि । दधज्ज्योतिर्जनेभ्यः ॥४॥ 879

अग्ने केतुर्विशामसि प्रेष्ठः श्रेष्ठ उपस्थसत् । बोधा स्तोत्रे वयो दधत् ॥५।१५॥ 880

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाꣳ रेताꣳसि जिन्वति ॥१॥ 881

ईशिषे वार्यस्य हि दात्रस्याग्ने स्वःपतिः । स्तोता स्यां तव शर्मणि ॥२॥ 882

उदग्ने शुचयस्तव शुक्रा भ्राजंत ईरते । तव ज्योतीꣳष्यर्चयः ॥३।१६॥ 883

॥ इति अर्धप्रपाठकः ॥

कस्ते जामिर्जनानामग्ने को दाश्वध्वरः । को ह कस्मिन्नसि श्रितः ॥१॥ 884

त्वं जामिर्जनानामग्ने मित्रो असि प्रियः । सखा सखिभ्य ईड्यः ॥२॥ 885

यजा नो मित्रावरुणा यजा देवाꣳ ऋतं बृहत् । अग्ने यक्षि स्वं दमम् ॥३।१॥ 886

ईडेन्यो नमस्यस्तिरस्तमाꣳसि दर्शतः । समग्निरिध्यते वृषा ॥१॥ 887

वृषो अग्निः समिध्यतेऽश्वो न देववाहनः । तꣳ हविष्मंत ईडते ॥२॥ 888

वृषणं त्वा वयं वृषन्वृषणः समिधीमहि । अग्ने दीद्यतं बृहत् ॥३।२॥ 889

उत्ते बृहंतो अर्चयः समिधानस्य दीदिवः । अग्ने शुक्रास ईरते ॥१॥ 890

उप त्वा जुह्वो३ मम घृताचीर्यंतु हर्यत । अग्ने हव्या जुषस्व नः ॥२॥ 891
मंद्रꣳ होतारमृत्विजं चित्रभानुं विभावसुम् । अग्निमीडे स उ श्रवत् ॥३।३॥ 892
पाहि नो अग्न एकया पाह्यू३त द्वितीयया ।
पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो ॥१॥ 893
पाहि विश्वस्माद्रक्षसो अराव्णः प्र स्म वाजेषु नो ऽव ।
त्वामिद्धि नेदिष्ठं देवतातय आपिं नक्षामहे वृधे ॥२।४॥ 894
इनो राजन्नरतिः समिद्धो रौद्रो दक्षाय सुषुमाꣳ अदर्शि ।
चिकिद्वि भाति भासा बृहतासिक्नीमेति रुशतीमपाजन् ॥१॥ 895
कृष्णां यदेनीमभि वर्पसाभूज्जनयन्योषां बृहतः पितुर्जाम् ।
ऊर्ध्वं भानुꣳ सूर्यस्य स्तभायं दिवो वसुभिररतिर्वि भाति ॥२॥ 896
भद्रो भद्रया सचमान आगात्स्वसारं जारो अभ्येति पश्चात् ।
सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्रुशद्भिर्वर्णैरभि राममस्थात् ॥३।५॥ 897
कया ते अग्ने अंगिर ऊर्जो नपादुपस्तुतिम् । वराय देव मन्यवे ॥१॥ 898
दाशेम कस्य मनसा यज्ञस्य सहसो यहो । कदु वोच इदं नमः ॥२॥ 899
अधा त्वꣳ हि नस्करो विश्वा अस्मभ्यꣳ सुक्षितीः । वाजद्रविणसो गिरः ॥३।६॥ 900
अग्न आ याह्यग्निभिर्होतारं त्वा वृणीमहे ।
आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे ॥१॥ 901
अच्छा हि त्वा सहसः सूनो अंगिरः स्रुचश्चरंत्यध्वरे ।

ऊर्जो नपातं घृतकेशमीमहे ऽ ग्निं यज्ञेषु पूर्व्यम् ॥२।७॥ 902
अछा नः शीरशोचिषं गिरो यंतु दर्शतम् ।
अछा यज्ञासो नमसा पुरूवसुं पुरुप्रशस्तमूतये ॥१॥ 903
अग्निꣳ सूनुꣳ सहसो जातवेदसं दानाय वार्याणाम् ।
द्विता यो भूदमृतो मर्त्येष्वा होता मंद्रतमो विशि ॥२।८॥ 904
अदाभ्यः पुरएता विशामग्निर्मानुषीणाम् । तूर्णी रथः सदा नवः ॥१॥ 905
अभि प्रयाꣳसि वाहसा दाश्वाꣳ अश्नोति मर्त्यः । क्षयं पावकशोचिषः ॥२॥ 906
साह्वान्विश्वा अभियुजः क्रतुर्देवानाममृक्तः । अग्निस्तुविश्रवस्तमः ॥३।९॥ 907
भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः ।
भद्रा उत प्रशस्तयः ॥१॥ 908
भद्रं मनः कृणुष्व वृत्रतूर्ये येना समत्सु सासहिः ।
अव स्थिरा तनुहि भूरि शर्धतां वनेमा ते अभिष्टये ॥२।१०॥ 909
अग्ने वाजस्य गोमत ईशानः सहसो यहो ।
अस्मे देहि जातवेदो महि श्रवः ॥१॥ 910
स इधानो वसुष्कविरग्निरीडेन्यो गिरा ।
रेवदस्मभ्यं पुर्वणीक दीदिहि ॥२॥ 911
क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः ।
स तिग्मजंभ रक्षसो दह प्रति ॥३।११॥ 912

विशोविशो वो अतिथिं वाजयंतः पुरुप्रियम् ।
अग्निं वो दुर्यं वच स्तुषे शूषस्य मन्मभिः ॥ १ ॥ 913
यं जनासो हविष्मंतो मित्रं न सर्पिरासुतिम् । प्रशंसंति प्रशस्तिभिः ॥२॥ 914
पन्यांसं जातवेदसं यो देवतात्युद्यता । हव्यान्यैरयद्दिवि ॥ ३ । १२ ॥ 915
समिद्धमग्निं समिधा गिरा गृणे शुचिं पावकं पुरो अध्वरे ध्रुवम् ।
विप्रं होतारं पुरुवारमद्रुहं कविं सुम्नैरीमहे जातवेदसम् ॥ १ ॥ 916
त्वां दूतमग्ने अमृतं युगेयुगे हव्यवाहं दधिरे पायुमीड्यम् ।
देवासश्च मर्तासश्च जागृविं विभुं विश्पतिं नमसा नि षेदिरे ॥ २ ॥ 917
विभूषन्नग्न उभयां अनु व्रता दूतो देवानां रजसी समीयसे ।
यत्ते धीतिं सुमतिमावृणीमहे ऽध स्मा नस्त्रिवरूथः शिवो भव ॥३।१३॥ 918
उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः । वायोरनीके अस्थिरन् ॥१॥ 919
यस्य त्रिधात्ववृतं बर्हिस्तस्थावसंदिनम् । आपश्चिन्नि दधा पदम् ।
पदं देवस्य मीढुषो ऽनाधृष्टाभिरूतिभिः । भद्रा सूर्य इवोपदृक् ॥३।१४॥ 920

॥ इति द्वितीयो ऽर्धप्रपाठकः ॥

अभि त्वा पूर्वपीतय इंद्र स्तोमेभिरायवः ।
समीचीनास ऋभवः समस्वरन्रुद्रा गृणंत पूर्व्यम् ॥ १ ॥ 921
अस्येदिंद्रो वावृधे वृष्ण्यं शवो मदे सुतस्य विष्णवि ।

अद्या तमस्य महिमानमायवोऽनु ष्टुवंति पूर्वथा ॥३१॥ 922

प्र वामर्चन्त्युक्थिनो नीथाविदो जरितारः । इंद्राग्नी इष आ वृणे ॥१॥ 923

इंद्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् । साकमेकेन कर्मणा ॥२॥ 924

इंद्राग्नी अपसस्पर्युप प्र यंति धीतयः । ऋतस्य पथ्या३ अनु ॥३॥ 925

इंद्राग्नी तविषाणि वाꣳ सधस्थानि प्रयाꣳसि च । युवोरप्तूर्यꣳ हितम् ॥४।२॥ 926

शग्ध्यू३ षु शचीपत इंद्र विश्वाभिरूतिभिः ।

भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥१॥ 927

पौरो अश्वस्य पुरुकृद्गवामस्युत्सो देव हिरण्ययः ।

न किर्हि दानं परि मर्धिषत्वे यद्यद्यामि तदा भर ॥२।३॥ 928

त्वꣳ ह्येहि चेरवे विदा भगं वसुत्तये ।

उद्वावृषस्व मघवन्गविष्टय उदिंद्राश्वमिष्टये ॥१॥ 929

त्वं पुरू सहस्राणि शतानि च यूथा दानाय मꣳहसे ।

आ पुरंदरं चकृम विप्रवचस इंद्रं गायंतोऽवसे ॥२।४॥ 930

यो विश्वा दयते वसु होता मंद्रो जनानाम् ।

मधोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यंत्वग्नये ॥१॥ 931

अश्वं न गीर्भी रथ्यꣳ सुदानवो मर्मृज्यंते देवयवः ।

उभे तोके तनये दस्म विश्पते पर्षि राधो मघोनाम् ॥२।५॥ 932

इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युरा चके ॥१।६॥ 933

कया त्वं न ऊत्याभि प्र मंदसे वृषन् । कया स्तोतृभ्य आ भर ॥१।७॥ 934

इंद्रमिद्देवतातय इंद्रं प्रयत्यध्वरे ।
इंद्रꣳ समीके वनिनो हवामह इंद्रं धनस्य सातये ॥१॥ 935

इंद्रो मह्ना रोदसी पप्रथच्छव इंद्रः सूर्यमरोचयत् ।
इंद्रे ह विश्वा भुवनानि येमिर इंद्रे स्वानास इंदवः ॥२।८॥ 936

विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व तन्वा३ꣳ स्वा हि ते ।
मुह्यंत्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥२।९॥ 937

अया रुचा हरिण्या पुनानो विश्वा द्वेषाꣳसि तरति सयुग्वभिः सूरो न सयुग्वभिः ।
धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः ।
विश्वा यद्रूपा परियास्यृक्वभिः सप्तास्येभिर्ऋक्वभिः ॥१॥ 938

प्राचीमनु प्रदिशं याति चेकितत्सꣳ रश्मिभिर्यतते दर्शतो रथो दैव्यो दर्शतो रथः ।
अग्मन्नुक्थानि पौꣳस्येंद्रं जैत्राय हर्षयन् ।
वज्रश्च यद्भवथो अनपच्युता समत्स्वनपच्युता ॥२॥ 939

त्वꣳ ह त्यत्पणीनां विदो वसु सं मातृभिर्मर्जयसि स्व आ दम ऋतस्य धीतिभिर्दमे ।
परावतो न साम तद्यत्रा रणंति धीतयः । 940

त्रिधातुभिररुषीभिर्वयो दधे रोचमानो वयो दधे ॥३।१०॥ 940

उत नो गोषणिं धियमश्वसां वाजसामुत । नृवत्कृणुह्यूतये ॥१।११॥ 941

शशमानस्य वा नरः स्वेदस्य सत्यशवसः। विदा कामस्य वेनतः ॥१।१२॥ 942

उप नः सूनवो गिरः शृण्वंत्वमृतस्य ये। सुमृडीका भवंतु नः ॥१।१३॥ 943

प्र वां महि द्यवी अभ्युपस्तुतिं भरामहे। शुची उप प्रशस्तये ॥१॥ 944

पुनाने तन्वा मिथः स्वेन दक्षेण राजथः। ऊह्याथे सनादृतम् ॥२॥ 945

मही मित्रस्य साधथस्तरंती पिप्रती ऋतम्। परि यज्ञं नि षेदथुः ॥३।१४॥ 946

अयमु ते समतसि कपोत इव गर्भधिम्। वचस्तच्चिन्न ओहसे ॥१॥ 947

स्तोत्रꣳ राधानां पते गिर्वाहो वीर यस्य ते। विभूतिरस्तु सूनृता ॥२॥ 948

ऊर्ध्वस्तिष्ठा न ऊतये ऽस्मिन्वाजे शतक्रतो। समन्येषु ब्रवावहै ॥३।१५॥ 949

गाव उप वदावटे मही यज्ञस्य रप्सुदा। उभा कर्णा हिरण्यया ॥१॥ 950

अभ्यारमिदद्रयो निषिक्तं पुष्करे मधु। अवटस्य विसर्जने ॥२॥ 951

सिंचंति नमसावटमुच्चाचक्रं परिज्मानम्। नीचीनबारमक्षितम् ॥३।१६॥ 952

मा भेम मा श्रमिष्मोग्रस्य सख्ये तव।

महत्ते वृष्णो अभिचक्ष्यं कृतं पश्येम तुर्वशं यदुम् ॥१॥ 953

सव्यामनु स्फिग्यं वावसे वृषा न दानो अस्य रोषति।

मध्वा संपृक्ताः सारघेण धेनवस्तूयमेहि द्रवा पिब ॥२।१७॥ 954

इमा उ त्वा पुरूवसो गिरो वर्धंतु या मम। 955

पावकवर्णाः शुचयो विपश्चितो ऽभि स्तोमैरनूषत ॥१॥ 955

अयं सहस्रमृषिभिः सहस्कृतः समुद्र इव पप्रथे ।
सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ॥२।१८॥ 956

यस्यायं विश्व आर्यो दासः शेवधिपा अरिः ।
तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सो अज्यते रयिः ॥१॥ 957

तुरण्यवो मधुमंतं घृतश्चुतं विप्रासो अर्कमानृचुः ।
अस्मे रयिः पप्रथे वृष्ण्यं शवो ऽस्मे स्वानास इंदवः ॥२।१९॥ 958

गोमन्न इंदो अश्ववत्सुतः सुदक्ष धनिव ।
शुचिं च वर्णमधि गोषु धारय ॥१॥ 959

स नो हरीणां पत इंदो देवप्सरस्तमः ।
सखेव सख्ये नर्यो रुचे भव ॥२॥ 960

सनेमि त्वमस्मदा अदेवं कं चिदत्रिणम् ।
साह्वाँ इंदो परि बाधो अप द्वयुम् ॥३।२०॥ 961

अंजते व्यंजते समंजते क्रतुं रिहंति मधाभ्यंजते ।
सिंधोरुच्छ्वासे पतयंतमुक्षणं हिरण्यपावाः पशुमप्सु गृभ्णते ॥१॥ 962

विपश्चिते पवमानाय गायत मही न धारात्यंधो अर्षति ।
अहिर्न जूर्णामति सर्पति त्वचमत्यो न क्रीडन्नसरद्वृषा हरिः ॥२॥ 963

अग्रेगो राजाप्यस्तविष्यते विमानो अह्नां भुवनेष्वर्पितः । 964

हरिर्घृतस्नुः सुदृशीको अर्णवो ज्योतीरथः पवते राय ओक्यः ॥३।२१॥ 964

॥ इति सप्तमः प्रपाठकः ॥

विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः । चनो धाः सहसो यहो ॥१॥ 965

यच्चिद्धि शश्वता तना देवंदेवं यजामहे । त्वे इद्धूयते हविः ॥२॥ 966

प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्यः । प्रियाः स्वग्नयो वयम् ॥३।१॥ 967

इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः ॥१॥ 968

स नो वृषन्नमुं चरुꣳ सत्रादावन्नपा वृधि । अस्मभ्यमप्रतिष्कुतः ॥२॥ 969

वृषा यूथेव वꣳसगः कृष्टीरियर्त्योजसा । ईशानो अप्रतिष्कुतः ॥३।२॥ 970

त्वं नश्चित्र ऊत्या वसो राधाꣳसि चोदय ।
अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः ॥१॥ 971

पर्षि तोकं तनयं पर्तृभिष्ट्वमदब्धैरप्रयुत्वभिः ।
अग्ने हेडाꣳसि दैव्या युयोधि नोऽदेवानि ह्वराꣳसि च ॥२।३॥ 972

किमित्ते विष्णो परिचक्षि नाम प्र यद्ववक्षे शिपिविष्टो अस्मि ।
मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ ॥१॥ 973

प्र तत्ते अद्य शिपिविष्ट हव्यमर्यः शꣳसामि वयुनानि विद्वान् ।
तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके ॥२॥ 974

वषट्ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । 975

वर्धंतु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ ३ । ४ ॥

वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु ।
आ याहि सोमपीतये स्पार्हो देव नियुत्वता ॥ १ ॥

इंद्रश्च वायवेषाꣳ सोमानां पीतिमर्हथः ।
युवाꣳ हि यंतींदवो निम्नमापो न सध्र्यक् ॥ २ ॥

वायविंद्रश्च शुष्मिणा सरथꣳ शवसस्पती ।
नियुत्वंता न ऊतय आ यातꣳ सोमपीतये ॥ ३ । ५ ॥

अध क्षपा परिष्कृतो वाजाꣳ अभि प्र गाहसे ।
यदी विवस्वतो धियो हरिꣳ हिन्वंति यातवे ॥ १ ॥

तमस्य मर्जयामसि मदो य इंद्रपातमः ।
यं गाव आसभिर्दधुः पुरा नूनं च सूरयः ॥ २ ॥

तं गाथया पुराण्या पुनानमभ्यनूषत ।
उतो कृपंत धीतयो देवानां नाम बिभ्रतीः ॥ ३ । ६ ॥

अश्वं न त्वा वारवंतं वंदध्या अग्निं नमोभिः । सम्राजंतमध्वराणाम् ॥ १ ॥

स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः । मीढ्वाꣳ अस्माकं बभूयात् ॥ २ ॥

स नो दूराच्चासाच्च नि मर्त्यादघायोः । पाहि सदमिद्विश्वायुः ॥ ३ । ७ ॥

त्वमिंद्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
अशस्तिहा जनिता वृत्रतूरसि त्वं तूर्य तरुष्यतः ॥ १ ॥

अनु ते शुष्मं तुरयंतमीयतुः क्षोणी शिशुं न मातरा ।

विश्वास्ते स्पृधः श्नथयंत मन्यवे वृत्रं यदिंद्र तूर्वसि ॥२।८॥ 986

यज्ञ इंद्रमवर्धयद्यद्भूमिं व्यवर्तयत् । चक्राण ओपशं दिवि ॥१॥ 987

व्या३ंतरिक्षमतिरन्मदे सोमस्य रोचना । इंद्रो यदभिनद्वलम् ॥२॥ 988

उद्गा आजदंगिरोभ्य आविष्कृण्वन्गुहा सतीः । अर्वांचं नुनुदे वलम् ॥३।९॥ 989

त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम् । आ च्यावयस्यूतये ॥१॥ 990

युध्मꣳ संतमनर्वाणꣳ सोमपामनपच्युतम् । नरमवार्यक्रतुम् ॥२॥ 991

शिक्षा ण इंद्र राय आ पुरु विद्वाꣳ ऋचीषम । अवा नः पार्ये धने ॥३।१०॥ 992

तव त्यदिंद्रियं बृहत्तव दक्षमुत क्रतुम् ।

वज्रꣳ शिशाति धिषणा वरेण्यम् ॥१॥ 993

तव द्यौरिंद्र पौꣳस्यं पृथिवी वर्धति श्रवः ।

त्वामापः पर्वतासश्च हिन्विरे ॥२॥ 994

त्वां विष्णुर्बृहन्क्षयो मित्रो गृणाति वरुणः ।

त्वाꣳ शर्धो मदत्यनु मारुतम् ॥३।११॥ 995

नमस्ते अग्न ओजसे गृणंति देव कृष्टयः । अमैरमित्रमर्दय ॥१॥ 996

कुवित्सु नो गविष्टये ऽग्ने संवेषिषो रयिम् । उरुकृदुरु णस्कृधि ॥२॥ 997

मा नो अग्ने महाधने परा वर्ग्भारभृद्यथा । संवर्गꣳ सꣳ रयिं जय ॥३।१२॥ 998

समस्य मन्यवे विशो विश्वा नमंत कृष्टयः । समुद्रायेव सिंधवः ॥१॥ 999

वि चिद्वृत्रस्य दोधतः शिरो बिभेद वृष्णिना । वज्रेण शतपर्वणा ॥ २ ॥ 1000

ओजस्तदस्य तित्विष उभे यत्समवर्तयत् । इंद्रश्चर्मेव रोदसी ॥ ३ । १३ ॥ 1001

सुमन्मा वस्वी रंती सूनरी ॥ १ ॥ 1002

सरूप वृषन्ना गह्रीमौ भद्रौ धुर्यावभि । ताविमा उप सर्पतः ॥ २ ॥ 1003

नीव शीर्षाणि मृढ्वं मध्य आपस्य तिष्ठति । शृंगेभिर्दशभिर्दिशन् ॥ ३ । १४ ॥ 100

॥ इति अर्धप्रपाठकः ॥

पन्यंपन्यमित्सोतार आ धावत मद्याय । सोमं वीराय शूराय ॥ १ ॥ 1005

एह हरी ब्रह्मयुजा शग्मा वक्षतः सखायम् । इंद्रं गीर्भिर्गिर्वणसम् ॥ २ ॥ 100

पाता वृत्रहा सुतमा घा गमन्नारे अस्मत् । नि यमते शतमूतिः ॥ ३ । १ ॥ 100

आ त्वा विशंत्विंदवः समुद्रमिव सिंधवः । न त्वामिंद्राति रिच्यते ॥ १ ॥ 100

विव्यक्थ महिना वृषन्भक्षं सोमस्य जागृवे । य इंद्र जठरेषु ते ॥ २ ॥ 1009

अरं त इंद्र कुक्षये सोमो भवतु वृत्रहन् । अरं धामभ्य इंदवः ॥ ३ । २ ॥ 1010

जराबोध तद्विविड्ढि विशेविशे यज्ञियाय । स्तोमं रुद्राय दृशीकम् ॥ १ ॥ 1011

स नो महाँ अनिमानो धूमकेतुः पुरुश्चंद्रः । धिये वाजाय हिन्वतु ॥ २ ॥ 101

स रेवाँ इव विश्पतिर्दैव्यः केतुः शृणोतु नः । उक्थैरग्निर्बृहद्भानुः ॥ ३ । ३ ॥ 101

तद्वो गाय सुते सचा पुरुहूताय सत्वने । शं यद्गवे न शाकिने ॥ १ ॥ 1014

न घा वसुर्नि यमते दानं वाजस्य गोमतः । यत्सीमुपश्रवद्गिरः ॥ २ ॥ 101

कुवित्सस्य प्र हि व्रजं गोमंतं दस्युहा गमत् । शचीभिरप नो वरत् ॥३।४॥ 1016

इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूढमस्य पांसुले ॥१॥ 1017

त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥२॥ 1018

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इंद्रस्य युज्यः सखा ॥३॥ 1019

तद्विष्णोः परमं पदं सदा पश्यंति सूरयः । दिवीव चक्षुराततम् ॥४॥ 1020

तद्विप्रासो विपन्युवो जागृवांसः समिंधते । विष्णोर्यत्परमं पदम् ॥५॥ 1021

अतो देवा अवंतु नो यतो विष्णुर्विचक्रमे । पृथिव्या अधि सानवि ॥६।५॥ 1022

मो षु त्वा वाघतश्च नारे अस्मन्नि रीरमन् ।

आरात्ताद्वा सधमादं न आ गहीह वा सन्नुप श्रुधि ॥१॥ 1023

इमे हि ते ब्रह्मकृतः सुते सचा मधौ न मक्ष आसते ।

इंद्रे कामं जरितारो वसूयवो रथे न पादमा दधुः ॥२।६॥ 1024

अस्तावि मन्म पूर्व्यं ब्रह्मेंद्राय वोचत ।

पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षत ॥१॥ 1025

समिंद्रो रायो बृहतीरधूनुत सं क्षोणी समु सूर्यम् ।

सं शुक्रासः शुचयः सं गवाशिरः सोमा इंद्रममंदिषुः ॥२।७॥ 1026

इंद्राय सोम पातवे वृत्रघ्ने परि षिच्यसे ।

नरे च दक्षिणावते वीराय सदनासदे ॥१॥ 1027

तं सखायः पुरूरुचं वयं यूयं च सूरयः । 1028

अश्याम वाजगंध्यꣳ सनेम वाजपस्त्यम् ॥२॥ 1028

परि त्यꣳ हर्यतꣳ हरिं॰ ॥३।८॥ 1029

कस्तमिंद्र त्वावसो॰ ॥१॥ 1030

मघोनः स्म वृत्रहत्येषु चोदय ये ददति प्रिया वसु ।
तव प्रणीती हर्यश्व सूरिभिर्विश्वा तरेम दुरिता ॥२।९॥ 1031

एदु मधोर्मदिंतरꣳ सिंचाध्वर्यो अंधसः ।
एवा हि वीर स्तवते सदावृधः ॥१॥ 1032

इंद्र स्थातर्हरीणां न किष्टे पूर्व्यस्तुतिम् ।
उदानꣳश शवसा न भंदना ॥२॥ 1033

तं वो वाजानां पतिमहूमहि श्रवस्यवः ।
अप्रायुभिर्यज्ञेभिर्वावृधेन्यम् ॥३।१०॥ 1034

तं गूर्धया स्वर्णरं देवासो देवमरतिं दधन्विरे ।
देवत्रा हव्यमूहिषे ॥१॥ 1035

विभूतरातिं विप्र चित्रशोचिषमग्निमीडिष्व यंतुरम् ।
अस्य मेधस्य सोम्यस्य सोभरे प्रेमध्वराय पूर्व्यम् ॥२।११॥ 1036

आ सोम स्वानो अद्रिभिस्तिरो वाराण्यव्यया ।
जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दध्रिषे ॥१॥ 1037

स मामृजे तिरो अण्वानि मेष्यो मीढ्वांत्सप्तिर्न वाजयुः । 1038

अनुमाद्यः पवमानो मनीषिभिः सोमो विप्रेभिर्ऋक्वभिः ॥२।१॥ 1038

वयमेनमिदा ह्योऽपीपेमेह वज्रिणम्।
तस्मा उ अद्य सवने सुतं भरा नूनं भूषत श्रुते ॥१॥ 1039

वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति।
सेमं न स्तोमं जुजुषाण आ गहीन्द्र प्र चित्रया धिया ॥२।१३॥ 1040

इंद्राग्नी रोचना दिवः परि वाजेषु भूषथः। तद्वां चेति प्र वीर्यम् ॥१॥ 1041

इंद्राग्नी अपसस्परि० ॥२॥ 1042

इंद्राग्नी तविषाणि वां० ॥३।१४॥ 1043

क ईं वेद सुते सचा० ॥१॥ 1044

दाना मृगो न वारणः पुरुत्रा चरथं दधे।
न किष्ट्वा नि यमदा सुते गमो महांश्चरस्योजसा ॥२॥ 1045

य उग्रः सन्ननिष्टृतः स्थिरो रणाय संस्कृतः।
यदि स्तोतुर्मघवा शृणवद्धवं नेंद्रो योषत्या गमत् ॥३।१५॥ 1046

पवमाना असृक्षत सोमाः शुक्रास इंदवः। अभि विश्वानि काव्या ॥१॥ 1047

पवमाना दिवस्पर्यंतरिक्षादसृक्षत। पृथिव्या अधि सानवि ॥२॥ 1048

पवमानास आशवः शुभ्रा असृग्रमिंदवः। घ्नंतो विश्वा अप द्विषः ॥३।१६॥ 1049

तोशा वृत्रहणा हुवे सजित्वानापराजिता। इंद्राग्नी वाजसातमा ॥१॥ 1050

प्र वामर्चंत्युक्थिनः० ॥२॥ 1051

इंद्राग्नी नवतिं पुरः० ॥ ३ । १७ ॥ 1052

उप त्वा रण्वसंदृशं प्रयस्वंतः सहस्कृत । अग्ने ससृज्महे गिरः ॥ १ ॥ 1053

उप छायामिव घृणेरगन्म शर्म ते वयम् । अग्ने हिरण्यसंदृशः ॥ २ ॥ 1054

य उग्र इव शर्यहा तिग्मशृंगो न वंसगः । अग्ने पुरो रुरोजिथ ॥ ३ । १८ ॥ 1055

ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रं घर्ममीमहे ॥ १ ॥ 1056

य इदं प्रतिपप्रथे यज्ञस्य स्वरुत्तिरन् । ऋतूनुत्सृजते वशी ॥ २ ॥ 1057

अग्निः प्रियेषु धामसु कामो भूतस्य भव्यस्य । सम्राडेको वि राजति ॥ ३ । १९ ॥ 1058

॥ इति द्वितीयो ऽर्धप्रपाठकः ॥

अग्निः प्रत्नेन जन्मना शुंभानस्तन्वां३ स्वाम् । कविर्विप्रेण वावृधे ॥ १ ॥ 1059

ऊर्जो नपातमा हुवे ऽग्निं पावकशोचिषम् । अस्मिन्यज्ञे स्वध्वरे ॥ २ ॥ 1060

स नो मित्रमहस्त्वमग्ने शुक्रेण शोचिषा । देवैरा सत्सि बर्हिषि ॥ ३ । १ ॥ 1061

उत्ते शुष्मासो अस्थू रक्षो भिंदंतो अद्रिवः । नुदस्व याः परिस्पृधः ॥ १ ॥ 1062

अया निजघ्निरोजसा रथसंगे धने हिते । स्तवा अबिभ्युषा हृदा ॥ २ ॥ 1063

अस्य व्रतानि नाधृषे पवमानस्य दूढ्या । रुज यस्त्वा पृतन्यति ॥ ३ ॥ 1064

तं हिन्वंति मदच्युतं हरिं नदीषु वाजिनम् । इंदुमिंद्राय मत्सरम् ॥ ४ । २ ॥ 1065

आ मंद्रैरिंद्र हरिभिर्याहि मयूररोमभिः ।

मा त्वा के चिन्नि येमुरिन्न पाशिनो ऽति धन्वेव ताँ इहि ॥ १ ॥ 1066

वृत्रखादो वलꣳरुजः पुरां दर्मो अपामजः ।
स्थाता रथस्य हर्योरभिस्वर इंद्रो दृढा चिदारुजः ॥२॥ 1067
गंभीराꣳ उदधीꣳरिव क्रतुं पुष्यसि गा इव ।
प्र सुगोपा यवसं धेनवो यथा ह्रदं कुल्या इवाशत ॥३।३॥ 1068
यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम् ।
आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब ॥१॥ 1069
मंदंतु त्वा मघवन्निंद्रेंदवो राधोदेयाय सुन्वते ।
आमुष्या सोममपिबश्चमू सुतं ज्येष्ठं तद्दधिषे सहः ॥२।४॥ 1070
त्वमंग प्र शꣳसिषो देवः शविष्ठ मर्त्यम् ।
न त्वदन्यो मघवन्नस्ति मर्डितेंद्र ब्रवीमि ते वचः ॥१॥ 1071
मा ते राधाꣳसि मा त ऊतयो वसो ऽस्मान्कदा चना दभन् ।
विश्वा च न उपमिमीहि मानुष वसूनि चर्षणिभ्य आ ॥२।५॥ 1072
प्रति ष्या सूनरी जनी व्युच्छंती परि स्वसुः । दिवो अदर्शि दुहिता ॥१॥ 1073
अश्वेव चित्रारुषी माता गवामृतावरी । सखा भूदश्विनोरुषाः ॥२॥ 1074
उत सखास्यश्विनोरुत माता गवामसि । उतोषो वस्व ईशिषे ॥३।६॥ 1075
एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः । स्तुषे वामश्विना बृहत् ॥१॥ 1076
या दस्रा सिंधुमातरा मनोतरा रयीणाम् । धिया देवा वसुविदा ॥२॥ 1077
वच्यंते वां ककुहासो जूर्णायामधि विष्टपि । यद्वाꣳ रथो विभिष्पतात् ॥३।७॥ 1078

उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति ।
येन तोकं च तनयं च धामहे ॥ १ ॥ /1079

उषो अद्येह गोमत्यश्वावति विभावरि ।
रेवदस्मे व्युच्छ सूनृतावति ॥ २ ॥ /1080

युंक्ष्वा हि वाजिनीवत्यश्वाꣳ अद्यारुणाꣳ उषः ।
अथा नो विश्वा सौभगान्या वह ॥ ३ । ८ ॥ /1081

अश्विना वर्तिरस्मदा गोमद्दस्रा हिरण्यवत् ।
अर्वाग्रथꣳ समनसा नि यच्छतम् ॥ १ ॥ /1082

एह देवा मयोभुवा दस्रा हिरण्यवर्तनी ।
उषर्बुधो वहंतु सोमपीतये ॥ २ ॥ /1083

यावित्था श्लोकमा दिवो ज्योतिर्जनाय चक्रथुः ।
आ न ऊर्जं वहतमश्विना युवम् ॥ ३ । ९ ॥ /1084

अग्निं तं मन्ये यो वसुरस्तं यं यंति धेनवः ।
अस्तमर्वंत आशवोऽस्तं नित्यासो वाजिन इषꣳ स्तोतृभ्य आ भर ॥ १ ॥ /108[illegible]

अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः ।
अग्नी राये स्वाभुवꣳ स प्रीतो याति वार्यमिषꣳ स्तोतृभ्य आ भर ॥ २ ॥ /108[illegible]

सो अग्निर्यो वसुर्गृणे सं यमायंति धेनवः ।
समर्वंतो रघुद्रुवः सꣳ सुजातासः सूरय इषꣳ स्तोतृभ्य आ भर ॥ ३ । १० ॥ /108[illegible]

महे नो अद्य बोधयोषो राये दिवित्मती ।
यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ १ ॥ /1088

या सुनीथे शौचद्रथे व्यौछो दुहितर्दिवः ।
सा व्युछ सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ २ ॥ /1089

सा नो अद्याभरद्वसुर्व्युछा दुहितर्दिवः ।
यो व्यौछः सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ ३ । ११ ॥ /1090

प्रति प्रियतमं रथं वृषणं वसुवाहनम् ।
स्तोता वामश्विनावृषि स्तोमेभिर्भूषति प्रति माध्वी मम श्रुतं हवम् ॥ १ ॥ /1091

अत्यायातमश्विना तिरो विश्वा अहं सना ।
दस्रा हिरण्यवर्तनी सुषुम्णा सिंधुवाहसा माध्वी मम श्रुतं हवम् ॥ २ ॥ /1092

आ नो रत्नानि बिभ्रतावश्विना गछतं युवम् ।
रुद्रा हिरण्यवर्तनी जुषाणा वाजिनीवसू माध्वी मम श्रुतं हवम् ॥ ३ । १२ ॥ /1093

अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सस्रते नाकमछ ॥ १ ॥ /1094

अबोधि होता यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात् ।
समिद्धस्य रुशददर्शि पाजो महां देवस्तमसो निरमोचि ॥ २ ॥ /1095

यदीं गणस्य रशनामजीगः शुचिरङ्क्ते शुचिभिर्गोभिरग्निः ।
आद्दक्षिणा युज्यते वाजयंत्युत्तानामूर्ध्वो अधयज्जुहूभिः ॥ ३ । १३ ॥ /1096

इदꣳ श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा ।
यथा प्रसूता सवितुः सवायैवा रात्र्युषसे योनिमारैक् ॥ १ ॥ 1097

रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः ।
समानबंधू अमृते अनूची द्यावा वर्णं चरत आमिनाने ॥ २ ॥ 1098

समानो अध्वा स्वस्रोरनंतस्तमन्यान्या चरतो देवशिष्टे ।
न मेथेते न तस्थतुः सुमेके नक्तोषासा समनसा विरूपे ॥ ३ । १४ ॥ 1099

आ भात्यग्निरुषसामनीकमुद्विप्राणां देवया वाचो अस्थुः ।
अर्वाचा नूनं रथ्येह यातं पीपिवाꣳसमश्विना घर्ममछ ॥ १ ॥ 1100

न सꣳस्कृतं प्र मिमीतो गमिष्ठांति नूनमश्विनोपस्तुतेह ।
दिवाभिपित्वे ऽवसागमिष्ठा प्रत्यवर्तिं दाशुषे शंभविष्ठा ॥ २ ॥ 1101

उता यातꣳ संगवे प्रातरह्नो मध्यंदिन उदिता सूर्यस्य ।
दिवा नक्तमवसा शंतमेन नेदानीं पीतिरश्विना ततान ॥ ३ । १५ ॥ 1102

एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमंजते ।
निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावो ऽरुषीर्यंति मातरः ॥ १ ॥ 1103

उदपप्तन्नरुणा भानवो वृथा स्वायुजो अरुषीर्गा अयुक्षत ।
अक्रन्नुषासो वयुनानि पूर्वथा रुशंतं भानुमरुषीरशिश्रयुः ॥ २ ॥ 1104

अर्चंति नारीरपसो न विष्टिभिः समानेन योजनेना परावतः ।
इषं वहंतीः सुकृते सुदानवे विश्वेदह यजमानाय सुन्वते ॥ ३ । १६ ॥ 1105

अबोध्यग्निर्ज्म उदेति सूर्यो व्युषाश्चंद्रा मह्यावो अर्चिषा ।
आयुक्षातामश्विना यातवे रथं प्रासावीद्देवः सविता जगत्पृथक् ॥ १॥ 1106
यद्युंजाथे वृषणमश्विना रथं घृतेन नो मधुना क्षत्रमुक्षतम् ।
अस्माकं ब्रह्म पृतनासु जिन्वतं वयं धना शूरसाता भजेमहि ॥ २॥ 1107
अर्वाङ्त्रिचक्रो मधुवाहनो रथो जीराश्वो अश्विनोर्यातु सुष्टुतः ।
त्रिवंधुरो मघवा विश्वसौभगः शं न आ वक्षद्विपदे चतुष्पदे ॥ ३। १७॥ 1108
प्र ते धारा असश्चतो दिवो न यंति वृष्टयः । अच्छा वाजं सहस्रिणम् ॥ १॥ 1109
अभि प्रियाणि काव्या विश्वा चक्षाणो अर्षति । हरिस्तुंजान आयुधा ॥ २॥ 1110
स मर्मृजान आयुभिरिभो राजेव सुव्रतः । श्येनो न वंसु षीदति ॥ ३॥ 1111
स नो विश्वा दिवो वसूतो पृथिव्या अधि । पुनान इंदवा भर ॥ ४। १८॥ 1112

॥ इति अष्टमः प्रपाठकः ॥

प्रास्य धारा अक्षरन्वृष्णः सुतस्यौजसः । देवाँ अनु प्रभूषतः ॥ १॥ 1113
सप्तिं मृजंति वेधसो गृणंतः कारवो गिरा । ज्योतिर्जज्ञानमुक्थ्यम् ॥ २॥ 1114
सुषहा सोम तानि ते पुनानाय प्रभूवसो । वर्धा समुद्रमुक्थ्य ॥ ३। १॥ 1115
एष ब्रह्मा य ऋत्विय इंद्रो नाम श्रुतो गृणे ॥ १॥ 1116
त्वामिच्छवसस्पते यंति गिरो न संयतः ॥ २॥ 1117
वि स्रुतयो यथा पथ० ॥ ३। २॥ 1118

आ त्वा रथं यथोतये° ॥ १ ॥ //119

तुविशुष्म तुविक्रतो शचीवो विश्वया मते । आ पप्राथ महित्वना ॥ २ ॥ //120

यस्य ते महिना महः परि ज्मायंतमीयतुः । हस्ता वज्रं हिरण्ययम् ॥३।३॥ //121

आ यः पुरं नार्मिणीमदीदेदत्यः कविर्नभन्यो३ नार्वा ।

सूरो न रुरुक्वां छतात्मा ॥ १ ॥ //1122

अभि द्विजन्मा त्री रोचनानि विश्वा रजांसि शुशुचानो अस्थात् ।

होता यजिष्ठो अपां सधस्थे ॥ २ ॥ //1123

अयं स होता यो द्विजन्मा विश्वा दधे वार्याणि श्रवस्या ।

मर्तो यो अस्मै सुतुको ददाश ॥ ३ । ४ ॥ //1124

अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशम् ।

ऋध्यामा त ओहैः ॥ १ ॥ //1125

अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः ।

रथीर्ऋतस्य बृहतो बभूथ ॥ २ ॥ //1126

एभिर्नो अर्कैर्भवा नो अर्वाक्स्वा३र्ण ज्योतिः ।

अग्ने विश्वेभिः सुमना अनीकैः ॥ ३ । ५ ॥ //1127

अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य ।

आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः ॥ १ ॥ //1128

जुष्टो हि दूतो असि हव्यवाहनोऽग्ने रथीरध्वराणाम् । //1129

सनूरश्मिभ्यामुषसा सुवीर्यमस्मे धेहि श्रवो बृहत् ॥ २ । ६ ॥ 1129
विधुं दद्राणं समने बहूनां युवानं संतं पलितो जगार ।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ॥ १ ॥ 1130
शाकमना शाको अरुणः सुपर्ण आ यो महः शूरः सनादनीडः ।
यच्चिकेत सत्यमित्तन्न मोघं वसु स्पार्हमुत जेतोत दाता ॥ २ ॥ 1131
ऐभिर्ददे वृष्ण्या पौंस्यानि येभिरौक्षद्वृत्रहत्याय वज्री ।
ये कर्मणः क्रियमाणस्य मह्न ऋतेकर्ममुदजायंत देवाः ॥ ३ । ७ ॥ 1132
अस्ति सोमो अयं सुतः पिबंत्यस्य मरुतः । उत स्वराजो अश्विना ॥ १ ॥ 1133
पिबंति मित्रो अर्यमा तना पूतस्य वरुणः । त्रिषधस्थस्य जावतः ॥ २ ॥ 1134
उतो न्वस्य जोषमा इंद्रः सुतस्य गोमतः । प्रातर्होतेव मत्सति ॥ ३ । ८ ॥ 1135
बण्महां असि सूर्य बडादित्य महां असि ।
महस्ते सतो महिमा पनिष्टम मह्ना देव महां असि ॥ १ ॥ 1136
बट् सूर्य श्रवसा महां असि सत्रा देव महां असि ।
मह्ना देवानामसुर्यः पुरोहितो विभु ज्योतिरदाभ्यम् ॥ २ । ९ ॥ 1137
उप नो हरिभिः सुतं याहि मदानां पते । उप नो हरिभिः सुतम् ॥ १ ॥ 1138
द्विता यो वृत्रहंतमो विद इंद्रः शतक्रतुः । उप नो हरिभिः सुतम् ॥ २ ॥ 1139
त्वं हि वृत्रहन्नेषां पाता सोमानामसि । उप नो हरिभिः सुतम् ॥ ३ । १० ॥ 1140
प्र वो महे महेवृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम् । 1141

विशः पूर्वीः प्र चर चर्षणिप्राः ॥ १ ॥ ।।42

उरुव्यचसे महिने सुवृक्तिमिंद्राय ब्रह्म जनयंत विप्राः ।

तस्य व्रतानि न मिनंति धीराः ॥ २ ॥ ।।43

इंद्रं वाणीरनुत्तमन्युमेव सत्रा राजानं दधिरे सहध्यै ।

हर्यश्वाय बर्हया समापीन् ॥ ३ । ११ ॥ ।।44

यदिंद्र यावतस्त्वमेतावदहमीशीय ।

स्तोतारमिद्दधिषे रदावसो न पापत्वाय रंसिषम् ॥ १ ॥ ।।45

शिक्षेयमिन्महयते दिवेदिवे राय आ कुहचिद्विदे ।

न हि त्वदन्यन्मघवन्न आप्यं वस्यो अस्ति पिता च न ॥ २ । १२ ॥ ।।46

श्रुधी हवं विपिपानस्याद्रेर्बोधा विप्रस्यार्चतो मनीषाम् ।

कृष्वा दुवांस्यंतमा सचेमा ॥ १ ॥ ।।47

न ते गिरो अपि मृष्ये तुरस्य न सुष्टुतिमसुर्यस्य विद्वान् ।

सदा ते नाम स्वयशो विवक्मि ॥ २ ॥ ।।48

भूरि हि ते सवना मानुषेषु भूरि मनीषी हवते त्वामित् ।

मारे अस्मन्मघवं ज्योक्कः ॥ ३ । १३ ॥ ।।49

प्रो ष्वस्मै पुरोरथमिंद्राय शूषमर्चत ।

अभीके चिदु लोककृत्संगे समत्सु वृत्रहा ।

अस्माकं बोधि चोदिता नभंतामन्यकेषां ज्याका अधि धन्वसु ॥ १ ॥ ।।50

वः सिंधूंरवासृजो ऽधराचो अहन्नहिम् । | Śākvara
अशत्रुरिंद्र जज्ञिषे विश्वं पुष्यसि वार्यम् ।
तं त्वा परि ष्वजामहे नभंतामन्यकेषां ज्याका अधि धन्वसु ॥ २ ॥ //1151 Sāma
वि षु विश्वा अरातयो ऽर्यो नशंत नो धियः ।
अस्तासि शत्रवे वधं यो न इंद्र जिघांसति ।
या ते रातिर्ददिर्वसु नभंतामन्यकेषां ज्याका अधि धन्वसु ॥ ३ । १४ ॥ //1152
रेवाँ इद्रेवत स्तोता स्यात्वावतो मघोनः । प्रेदु हरिवः सुतस्य ॥ १ ॥ //1153
उक्थं च न शस्यमानं नागो रयिरा चिकेत । न गायत्रं गीयमानम् ॥ २ ॥ //1154
मा न इंद्र पीयत्नवे मा शर्धते परा दाः । शिक्षा शचीवः शचीभिः ॥ ३ । १५ ॥ //1155
एंद्र याहि हरिभिरुप कण्वस्य सुष्टुतिम् ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १ ॥ //1156
अत्रा वि नेमिरेषामुरां न धूनुते वृकः ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ २ ॥ //1157
आ त्वा ग्रावा वदन्निह सोमी घोषेण वक्षतु ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ३ । १६ ॥ //1158
पवस्व सोम मंदयन्निंद्राय मधुमत्तमः ॥ १ ॥ //1159
ते सुतासो विपश्चितः शुक्रा वायुमसृक्षत ॥ २ ॥ //1160
असृग्रं देववीतये वाजयंतो रथा इव ॥ ३ । १७ ॥ //1161

अग्निं होतारं मन्ये दास्वंतं वसोः सूनुं सहसो जातवेदसं विप्रं न जातवेदसम्।
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा।
घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः ॥१॥ 1162
यजिष्ठं त्वा यजमाना हुवेम ज्येष्ठमंगिरसां विप्र मन्मभिर्विप्रेभिः शुक्र मन्मभिः।
परिज्मानमिव द्यां होतारं चर्षणीनाम्।
शोचिष्केशं वृषणं यमिमा विशः प्रावंतु जूतये विशः ॥२॥ 1163
स हि पुरु चिदोजसा विरुक्मता दीद्यानो भवति द्रुहंतरः परशुर्न द्रुहंतरः।
वीडु चिद्यस्य समृतौ श्रुवद्वनेव यत्स्थिरम्।
निष्षहमाणो यमते नायते धन्वासहा नायते ॥३।१८॥ 1164

॥ इति अर्धप्रपाठकः ॥

अग्ने तव श्रवो वयो महि भ्राजंते अर्चयो विभावसो।
बृहद्भानो शवसा वाजमुक्थ्यां३ दधासि दाशुषे कवे॥१॥ 1165
पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना।
पुत्रो मातरा विचरन्नुपावसि पृणक्षि रोदसी उभे ॥२॥ 1166

ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मन्दस्व धीतिभिर्हितः ।
त्वे इषः सं दधुर्भूरिवर्पसश्चित्रोतयो वामजाताः ॥३॥ 1167
इरज्यन्नग्ने प्रथयस्व जंतुभिरस्मे रायो अमर्त्य ।
स दर्शतस्य वपुषो वि राजसि पृणक्षि दर्शतं क्रतुम् ॥४॥ 1168
इष्कर्तारमध्वरस्य प्रचेतसं क्षयंतꣳ राधसो महः ।
रातिं वामस्य सुभगां महीमिषं दधासि सानसिꣳ रयिम् ॥५॥ 1169
ऋतावानं महिषं विश्वदर्शतमग्निꣳ सुम्नाय दधिरे पुरो जनाः ।
श्रुत्कर्णꣳ सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा ॥६।१॥ 1170
प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्मभिः ।
यस्य त्वꣳ सख्यमाविथ ॥१॥ 1171
तव द्रप्सो नीलवान्वाश ऋत्विय इंधानः सिष्णवा ददे ।
त्वं महीनामुषसामसि प्रियः क्षपो वस्तुषु राजसि ॥२।२॥ 1172
तमोषधीर्दधिरे गर्भमृत्वियं तमापो अग्निं जनयंत मातरः ।
तमित्समानं वनिनश्च वीरुधोऽन्तर्वतीश्च सुवते च विश्वहा ॥१।३॥ 1173
अग्निरिन्द्राय पवते दिवि शुक्रो वि राजति । महिषीव वि जायते ॥१।४॥ 1174
यो जागार तमृचः कामयंते यो जागार तमु सामानि यंति ।
यो जागार तमयꣳ सोम आह तवाहमस्मि सख्ये न्योकाः ॥१।५॥ 1175
अग्निर्जागार तमृचः कामयंतेऽग्निर्जागार तमु सामानि यंति । 1176

अग्निर्जागार तमयꣳ सोम आह तवाहमस्मि सख्ये न्योकाः ॥ १ । ६ ॥ 1176

नमः सखिभ्यः पूर्वसद्भ्यो नमः साकंनिषेभ्यः । युञ्जे वाचꣳ शतपदीम् ॥ १ ॥ 1177

युञ्जे वाचꣳ शतपदीं गाये सहस्रवर्तनि । गायत्रं त्रैष्टुभं जगत् ॥ २ ॥ 1178

गायत्रं त्रैष्टुभं जगद्विश्वा रूपाणि संभृता । देवा ओकाꣳसि चक्रिरे ॥ ३ । ७ ॥ 1179

अग्निर्ज्योतिर्ज्योतिरग्निरिंद्रो ज्योतिर्ज्योतिरिंद्रः ।

सूर्यो ज्योतिर्ज्योतिः सूर्यः ॥ १ ॥ 1180

पुनरूर्जा नि वर्तस्व पुनरग्न इषायुषा । पुनर्नः पाह्यꣳहसः ॥ २ ॥ 1181

सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्न्या विश्वतस्परि ॥ ३ । ८ ॥ 1182

यदिंद्राहं यथा त्वमीशीय वस्व एक इत् । स्तोता मे गोसखा स्यात् ॥ १ ॥ 1183

शिक्षेयमस्मै दित्सेयꣳ शचीपते मनीषिणे । यदहं गोपतिः स्याम् ॥ २ ॥ 1184

धेनुष्ट इंद्र सूनृता यजमानाय सुन्वते । गामश्वं पिप्युषी दुहे ॥ ३ । ९ ॥ 1185

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥ १ ॥ 1186

यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ २ ॥ 1187

तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ ३ । १० ॥ 1188

वात आ वातु भेषजꣳ शंभु मयोभु नो हृदे । प्र न आयूꣳषि तारिषत् ॥ १ ॥ 1189

उत वात पितासि न उत भ्रातोत नः सखा । स नो जीवातवे कृधि ॥ २ ॥ 1190

यददो वात ते गृहे३ ऽमृतं निहितं गुहा । तस्य नो धेहि जीवसे ॥ ३ । ११ ॥ 1191

अभि वाजी विश्वरूपो जनित्रꣳ हिरण्ययं बिभ्रदत्कꣳ सुपर्णः । 1192

सूर्यस्य भानुमृतुथा वसानः परि स्वयं मेधमृज्रो जजान ॥१॥ 1192
अप्सु रेतः शिश्रिये विश्वरूपं तेजः पृथिव्यामधि यत्संबभूव ।
अंतरिक्षे स्वं महिमानं मिमानः कनिक्रंति वृष्णो अश्वस्य रेतः ॥२॥ 1193
अयꣳ सहस्रा परि युक्ता वसानः सूर्यस्य भानुं यज्ञो दाधार ।
सहस्रदाः शतदा भूरिदावा धर्ता दिवो भुवनस्य विश्पतिः ॥३।१२॥ 1194
नाके सुपर्णमुप यत्पतंतꣳ हृदा वेनंतो अभ्यचक्षत त्वा ।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥१॥ 1195
ऊर्ध्वो गंधर्वो अधि नाके अस्थात्प्रत्यङ्चित्रा बिभ्रदस्यायुधानि ।
वसानो अत्कꣳ सुरभिं दृशे कꣳ स्वा३र्ण नाम जनत प्रियाणि ॥२॥ 1196
द्रप्सः समुद्रमभि यज्जिगाति पश्यन्गृध्रस्य चक्षसा विधर्मन् ।
भानुः शुक्रेण शोचिषा चकानस्तृतीये चक्रे रजसि प्रियाणि ॥३।१३॥ 1197

॥ इति द्वितीयोऽर्धप्रपाठकः ॥

आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ।
संक्रंदनोऽनिमिष एकवीरः शतꣳ सेना अजयत्साकमिंद्रः ॥१॥ 1198
संक्रंदनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ।
तदिंद्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥२॥ 1199
स इषुहस्तैः स निषंगिभिर्वशी सꣳस्रष्टा स युध इंद्रो गणेन । 1200

सꣳसृष्टजित्सोमपा बाहुशर्ध्यूग्रधन्वा प्रतिहिताभिरस्ता ॥३।१॥ 1200

बृहस्पते परि दीया रथेन रक्षोहामित्राꣳ अपबाधमानः ।
प्रभंजंत्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥१॥ 1201

बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः ।
अभिवीरो अभिसत्वा सहोजा जैत्रमिंद्र रथमा तिष्ठ गोवित् ॥२॥ 1202

गोत्रभिदं गोविदं वज्रबाहुं जयंतमज्म प्रमृणंतमोजसा ।
इमꣳ सजाता अनु वीरयधमिंद्रꣳ सखायो अनु सꣳ रभधम् ॥३।२॥ 1203

अभि गोत्राणि सहसा गाहमानो ऽदयो वीरः शतमन्युरिंद्रः ।
दुश्च्यवनः पृतनाषाडयुध्यो३ ऽस्माकꣳ सेना अवतु प्र युत्सु ॥१॥ 1204

इंद्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ।
देवसेनानामभिभंजतीनां जयंतीनां मरुतो यंत्वग्रम् ॥२॥ 1205

इंद्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुताꣳ शर्ध उग्रम् ।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥३।३॥ 1206

उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां मनाꣳसि ।
उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानां जयतां यंतु घोषाः ॥१॥ 1207

अस्माकमिंद्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयंतु ।
अस्माकं वीरा उत्तरे भवंत्वस्माꣳ उ देवा अवता हवेषु ॥२॥ 1208

असौ या सेना मरुतः परेषामभ्येति न ओजसा स्पर्धमाना । 1209

तां गूहत तमसापव्रतेन यथैतेषामन्यो अन्यं न जानात् ॥ ३ । ४ ॥ 1209

अमीषां चित्तं प्रतिलोभयंती गृहाणांगान्यप्वे परेहि ।

अभि प्रेहि निर्दह हृत्सु शोकैरंधेनामित्रास्तमसा सचंताम् ॥ १ ॥ 1210

प्रेता जयता नर इंद्रो वः शर्म यछतु ।

उग्रा वः संतु बाहवो ऽनाधृष्या यथासथ ॥ २ ॥ 1211

अवसृष्टा परा पत शरव्ये ब्रह्मसंशिते ।

गछामित्रान्प्र पद्यस्व मामीषां कं च नोछिषः ॥ ३ । ५ ॥ 1212

कंकाः सुपर्णा अनु यंत्वेनान्गृध्राणामन्नमसावस्तु सेना ।

मैषां मोच्यघहारश्च नेंद्र वयांस्येनाननुसंयंतु सर्वान् ॥ १ ॥ 1213

अमित्रसेनां मघवन्नस्मां छत्रूयतीमभि ।

उभौ तामिंद्र वृत्रहन्नग्निश्च दहतं प्रति ॥ २ ॥ 1214

यत्र बाणाः संपतंति कुमारा विशिखा इव ।

तत्र नो ब्रह्मणस्पतिरदितिः शर्म यछतु विश्वाहा शर्म यछतु ॥ ३ । ६ ॥ 1215

वि रक्षो वि मृधो जहि वि वृत्रस्य हनू रुज ।

वि मन्युमिंद्र वृत्रहन्नमित्रस्याभिदासतः ॥ १ ॥ 1216

वि न इंद्र मृधो जहि नीचा यछ पृतन्यतः ।

यो अस्मां अभिदासत्यधरं गमया तमः ॥ २ ॥ 1217

इंद्रस्य बाहू स्थविरौ युवानावनाधृष्यौ सुप्रतीकावसह्यौ । 1218

ओ युंजीत प्रथमो योग आगते याभ्यां जितमसुराणाꣳ सह्यो महत् ॥३।७॥ 1218

मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजामृतेनानु वस्ताम् ।
उरोर्वरीयो वरुणस्ते कृणोतु जयंतं त्वानु देवा मदंतु॥१॥ 1219

अंधा अमित्रा भवताशीर्षाणो ऽ हय इव ।
तेषां वो अग्निनुन्नानामिंद्रो हंतु वरंवरम् ॥२॥ 1220

यो नः स्वो ऽ रणो यश्च निष्ट्यो जिघांसति ।
देवास्तꣳ सर्वे धूर्वंतु ब्रह्म वर्म ममांतरꣳ शर्म वर्म ममांतरम् ॥३।८॥ 1221

मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगंथा परस्याः ।
सृकꣳ सꣳशाय पविमिंद्र तिग्मं वि शत्रून् ताढि वि मृधो नुदस्व ॥१॥ 1222

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरंगैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥२॥ 1223

स्वस्ति न इंद्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥
ओ३म् ॥ स्वस्ति नो बृहस्पतिर्दधातु ॥३।९॥ 1224

॥ इति नवमः प्रपाठकः ॥

उत्तरार्चिकं समाप्तम् ॥

## Abkürzungen.

Ait. Br. = Aitareya-Brâhmaṇam.
AthV = Atharva Veda.
ArG = âranya Gâna.
ArGRBr = Rishi Brâhmanam insofern es sich auf ArG. bezieht.
B = Stevenson's Codex B.
C = Compositionsnamen.
Cod. = Codex.
D = Dichter.
G = Gottheit.
Gây = Gâyatrì.
M = Metrum.
M. M. = Müller's Cod. des SvC. (s. unter SvC.)
PA = Pùrvârcikam (1ste Abtheilung des Sv.)
RBr = Rishi Brâhmaṇam.
Rv = Rig Veda.
RvA = Rig Veda Anukramaṇikâ.
S. d. = Sohn des.
St. = Stevenson's Ausgabe und Uebersetzung des Sv.
Sv. = Sâma Veda.
SvC. = Commentar des Sâyaṇâcârya zum Sâma Veda.
UG. = ûha Gâna.
UhyG. = Uhya Gâna.
UttA. = Uttarârcikam (2te Abtheilung des Sv.)
VG. = Veya Gâna.
VGRBr = RBr insofern es sich auf VG bezieht.
Vin = Viniyoga.
YV. = Yajur Veda.

I, 1, 1, 1, 1 = Sv. II, 1, 1, 4, 1 = Rv. IV, 5, 22, 4 = VG. I, 1, 2 — 3 — = ArG. II, 32. — — **D.** Bharadvâja Bârhaspatya (RvA. SvC.) — **G.** Vaiçvânara — **M.** Gây (RvA.) — **C.** Kaçyapasya barhishyam — Gautamaso 'rkaḥ (VGRBr.) — Agneḥ priyam (ArGRBr.) s. UttA.

2 = Sv. II, 6, 3, 14, 1 = Rv. IV, 5, 21, 1 = UhyG. II, 2, 8 = VG. I, 1, 4 — **D.** Bharadvâja Bârhaspatya (RvA. SvC.) — **G.** Vaiçvânara — **M.** Vardhamâna — (RvA.) — **C.** Sauparṇam (VGRBr.) s. UttA.

3 = Sv. II, 2, 1, 6, 1 = Rv. I, 1, 22, 1 = Ait. Br. IV, 31 = VG. I, 1, 5. — **D.** Medhâtithi Kâṇva (RvA. u. SvC.) — **G.** Agni — **M.** Gây. (RvA.) — **C.** Vaiçvamanasam oder Bṛhad Bhâradvâjam, oder Bṛhad Agneyam, oder Bṛhat Sauram (VGRBr. — VGCodex nur Bṛhad Bhâradvâjam) s. UttA.

4 = Sv. II, 6, 2, 7, 1 = Rv. IV, 5, 27, 3 = VG. I, 1, 6 — 7 — 8 — **D.** Bharadvâja Bârhaspatya (RvA. SvC.) — **G.** Vaiçvânara — **M.** Gây. (RvA.) — Trîṇi Çrautarshâṇi (VGRBr.) —

5 = Sv. II, 5, 1, 18, 1 = Rv. VI, 6, 5, 1 = VG. I, 1, 9 — 10 — 11 = UG. V, 11 — **D.** Uçanas Kâvya (RvA. u. SvC.) — **G.** Agni — **M.** Gây. (RvA.) — **C.** Auçane und Çairîsham oder letzteres in der Mitte, oder alle drei Çairîshâṇi (VGRBr. — VGCod. bei VG. I, 9 Gâyatryauçanam) — s. UttA.

RV. अग्निं; im SvC. zu II, 5, 1, 18, 1 bemerkt.

6 = Rv. VI, 5, 11, 1 = VG. I, 1, 12 — 13 — **D.** Sudîti u. Purumîlha Angirasiden (RvA.), oder nur einer von beiden (RvA. — SvC., welcher Purumîdha nennt) — **G.** Agni — **M.** Gây. (RvA.) — **C.** Indrasya saṁvarge vârtraghne dve (VGRBr.)

7 = SV. II, 2, 1, 21, 1 = Rv. IV, 5, 24, 1 = VG. I, 1, 14 — 15 = UG. I, 15 — XIII, 12 — **D.** Bharadvâja Bârhaspatya (RvA. SvC.) — **G.** Vaiçvânara — **M.** Gây. (RvA.) — **C.** Sâkamaçvasya Çaunahçepeḥ sâmanî dve (VGRBr. — VGCod. bei I, 14 Sâkamaçvam) — s. UttA.

8 = Sv. II, 4, 2, 12, 1 = Rv. V, 8, 36, 2 = Yv. XII, 115 = VG. I, 1, 16 — 17 = UG. IV, 17 — **D.** Vatsa Kâṇva (RvA. SvC.) — **G.** Agni — **M.** Gây (RvA.) — **C.** Vatsasya Kâṇvasya sâmanî dve (VGRBr. — VGCod. Vâtsam bei I, 16) — (s. UttA.)

Rv. und Yv. u. B. त्वाकमया von SvC. zu II, 4, 2, 12, 1 bemerkt.

9 = Rv. IV, 5, 23, 3 = VG. I, 1, 18 — **D.** Bharadvâja Bârhaspatya (RvA. SvC.) — **G.** Vaiçvânara — **M.** Gây. — **C.** Agner ârsheyam (VGRBr.) —

10 = VG. I, 1, 19 — **D.** Vâmadeva (SvC.) — **G.**? — **M.** Gây. — **C.** Sumitrasya Vâdhryaçveḥ sâma oder Vâdhryaçvasyânûpasya (VGRBr.) —

I, 1, 1, 2, 1 = Sv. II, 8, 1, 12, 1 = Rv. VI, 5, 25, 5 = VG. I, 1, 20 = UG. XVI, 16. — **D.** Virûpa ângirasa (RvA.); dagegen Ahi oder Virûpa (nach SvC.) — **G.** Agni — **M.** Gây. (RvA.) — **C.** Agneḥ Saṁvargaḥ (VGRBr.) (s. UttA.) —

2 = Rv. III, 5, 8, 1 = VG. I, 1, 21 — **D.** Vâmadeva Gautama (RvA. — SvC.) — **G.** Vaiçvânara — **M.** Gây. (RvA.) — **C.** Vaiçvamanasam (VGRBr.) —

3 = Sv. II, 7, 2, 14, 1 = Rv. VI, 7, 11, 3 = VG. I, 1, 22 — 23. = ArG. II, 2, 9 — 10. = UG. XI, 13. — **D.** Prayoga Bhârgava (RvA. SvC.), oder Bârhaspatya Agni Pâvaka (RvA.) — **G.** Agni — **M.** Gây. (RvA.) **C.** Çnâbhaçraushṭîye (VGRBr.) — Udbhid und Balabhid (ArGCodex [RBr. Bṛhaspater balabhidî dve oder das erste Indrasya udbhid]). (s. UttA.).

4 = Rv. I, 1, 2, 2 = Yv. III, 22 = Ait. Br. I, 30 = VG. I, 1, 24 — **D.** Madhuchandas Vaiçvâmitra (RvA. SvC.) — **G.** Agni — **M.** Gây. (RvA.) — **C.** Vaiçvâmitram (VGRBr.)

5 = Sv. II, 8, 2, 3, 1 = Rv. I, 2, 23, 5 = VG. I, 1, 25 — 26 = UG. XIV, 5. — **D.** Çunaḥçepa âjîgarti (RvA. SvC.) — **G.** Agni — **M.** Gây. (RvA.) — **C.** Agner Jarabodhîye dve oder Rudrasya (VGRBr.) (s. UttA.)

Rv. accentuirt hier und auch sonst stets (s. Gl.) दृशीकं.

6 = Rv. I, 1, 36, 1 = VG. I, 1, 27 — **D.** Medhâtithi Kâṇva (RvA. SvC.) — **G.** Agni und Marut's — **M.** Gây. (RvA.) — **C.** Mârutam (VGRBr.) —

7 = Sv. II, 8, 1, 7, 1 = Rv. I, 2, 22,

1 = VG. I, 1, 28 — 29 — 30 = UG XII, 2, 17 — XXIII, 15 — **D.** Çunahçepa Âjîgarti (RvA. SvC.) — **G.** Agni — **M.** Gây. (RvA.) — **C.** Bhârgave dve oder Çaunahçepe und Indrasya Vâravantîyam oder alle drei Bhargavâni oder Çaunahçepâni oder Vâravantîyâni (VGRBr. — VGCodex hat bei 28 Vâravantîyâdyam bei 30 Vâravantîyottaram). (s. UttA.)

8 = Rv VI, 7, 9, 4 = VG. I, 1, 31 — 32 — **D.** Prayoga Bhârgava (RvA. SvC.), oder Bârhaspatya Agni Pâvaka (RvA.) — **G.** Agni — **M.** Gây. (RvA.) — **C.** Aurvasya Vaidhârayasya sâmanî dve oder Agneh oder Samudrasya vâsasî (VGRBr.) —

9 = Rv. VI, 7, 12, 5 = VG. I, 1, 33 — **D.** wie im vor. Vs. — **G.** ebenf. — **M.** ebf. — **C.** Atreh sangah (VGRBr.)

Rv. इषे.

10 = Rv. V, 8, 14, 5 = VG. I, 1, 34 — **D.** Vatsa Kânva (RvA. SvC.) — **G.** Indra — **M.** Gây. (RvA.) — **C.** Prajâpater nidhanakâmam (VGRBr.)

Rv. ज्योतिष्पश्यंति und दिवा.

I, 1, 1, 3, 1 = Sv. II, 3, 1, 20, 1 = Rv. VI, 7, 10, 2 = VG. I, 2, 1 — 2 — 3 = UG. II, 2, 20 — VI, 2, 11 — **D.** Prayoga Bhârgava (RvA. SvC.) oder Bârhaspatya Agni Pâvaka (RvA.) — **G.** Agni — **M.** Gây. (RvA.) — **C.** Saindhukshitâni (VGRBr. [VGCod. zu 1 Svârasaindhukshitam, zu 3 Aidasaind⁰].) (s. UttA.)

2 = Rv. IV, 5, 26, 3 = VG. I, 2, 4 — 5 — 6 — **D.** Bhâradvâja Bârhaspatya (RvA. SvC.) — **G.** Vaiçvânara — **M.** Gây (RvA.) — **C.** Agner harasî dve und Vâmadevyam (VGRBr. — [VGCodex bei 6 ihavad vâmad⁰].)

Rv. वासहि ⁰ und न्य १ त्रि⁰ und वनते.

3 = Rv. III, 5, 9, 1 = VG. I, 2, 7 — 8 — **D.** Vâmadeva Gautama (RvA. SvC.) — **G.** Vaiçvânara — **M.** Gay. (RvA.) — **C.** Vâme dve (VGRBr. u. VGCod.) —

Rv. अग्नि य ईमा — Rv. und B. die Schrbweise मृल, welche ich sonst für Rv. nicht besonders anmerke.

4 = Rv. V, 2, 20, 3 = VG. I, 2, 9 — **D.** Vasishtha (RvA. SvC.) — **G.** Agni — **M.** Gây. (RvA.) — **C.** Agne Râkshoghnam (VGRBr).

Rv. und B. प्रति स्म und रीषत: (wegen des verschiedenen Accents s. Gl.)

5 = Sv. II, 6, 2, 2, 1 = Rv. IV, 5, 29, 3 = VG. I, 2, 10 = ArG. III, 8 — **D.** Bharadvâja Bârhaspatya (RvA. SvC.) — **G.** Vaiçvânara — **M.** Gây. (RvA.) — **C.** Agne Râkshoghnam (VGRBr.) und Payahsâma (ArGRBr. u. ArGCod.) — (s. UttA.)

Rv. युक्वा und वहंति मन्यवे (von SvC. zu II, 6, 2, 2, 1 bemerkt).

6 = Rv. V, 2, 19, 2 = VG. I, 2, 11 — **D.** Vasishtha (RvA. SvC.) — **G.** Agni — **M.** Gây. (RvA.) — **C.** Vaiçvamanasam (VGRBr.)

Rv. द्युमंतं देव धीमहि.

7 = Sv. II, 7, 1, 16, 1 = Rv. VI, 3, 39, 1 = Yv. III, 12 — XIII, 14 — XV, 20 = VG. I, 2, 12 = ArG. I, 2, 7 — VI, 1 — 6 = UG. XVIII, 2, 15 — **D.** Virûpa Ângirasa (RvA. SvC.) — **G.** Agni — **M.** Gây. (RvA.) — **C.** Agner ârsheyam (VGRBr.) — Agner arkah (ArGRBr. u. ArGCodex) — Agner vratam und sûryasya (ArGRBr. — ArGCod. sûryaçvam?) bhrâjâbhrâjam (ArGRBr. u. ArGCod.) — (s. UttA.)

8 = Sv. II, 7, 1, 4, 1 = Rv. I, 2, 22, 4 = VG. I, 2, 13 = ArG. IV, 15 — **D.** Çunahçepa Âjîgarti (RvA. SvC.) — **G.** Agni — **M.** Gây. (RvA.) — **C.** Somasâma (VGRBr.) — Prajâpateh pratishthâ (ArGRBr. [ArGCod. Prajâpata pratishthâsâma].) (s. UttA.)

9 = Rv. VI, 5, 23, 1 = VG. I, 2, 14 — **D.** Gopavana Âtreya (RvA. SvC.), oder Saptavadhri Âtreya (RvA.) — **G.** Agni — **M.** Gây. (RvA.) — **C.** Gaupavanam (VGRBr.)

Rv. यं त्व⁰ und चनिष्ट⁰.

10 = Rv. III, 5, 15, 3 = Yv. XI, 25 = VG. I, 2, 15 — **D.** Vâmadeva Gautama (RvA. SvC.) — **G.** Vaiçvânara — **M.** Gây. (RvA.) — **C.** Sûryasâma (VGRBr.)

11 = Rv. I, 4, 7, 1 = Yv. VII, 41 = VG. I, 2, 16 = ArG. VI, 2, 4 — 11 — **D.** Praskanva Kânva (RvA.), dagegen Kanva (nach SvA.) — **G.** Sûrya — **M.** Gây. (RvA.) — **C.** Sûryasâma (VGRBr.) — 4 und 11 anugâna des âdityavratam (ArGRBr.)

12 = Rv. I, 1, 23, 1 = VG. I, 2, 17 — **D.** Medhâtithi Kânva (RvA. SvC.) — **G.** Agni — **M.** Gây. (RvA.) — **C.** Kâvam (VGRBr.)

13 = Rv. VII, 6, 5, 4 = VG. I, 2, 18 — 19 = ArG. I, 23 — **D.** Triçiras Tvâshtra oder Sindhudvîpa Âmbarîsha (nach RvA.), dagegen nach SvC: Sindhudvîpa und Ambarîsha oder Trita oder Âptya (M. M. सिंधुद्वीपस्य अंबरीषस्य चार्षं तृतस्य वा आप्त्यस्य वा ।; die Vermuthung läge nahe dass hier Ambarîsha⁰ u. Aptya⁰ wie gewöhnlich als Gentilnamen zu fassen und danach die Lesearten zu ändern sein; doch sind mir in Beziehung auf die Rishis eine Menge ähnlicher aber alter und schon von den Interpreten anerkannter Varianten begegnet, welche ganz das Ansehn haben als ob sie aus einer alten

Quelle herruhren und durch Unlesbarkeit entstanden sind; ich werde darüber an einem andern Ort genauer berichten. Auf keinen Fall durfte ich desshalb, zumal da ich nur einen Cod. des SvC. habe, und dazu einen sehr schlechten, ohne Weiteres ändern) — **G.** âpas — **M.** Gây. (RvA.) — **C.** Vasurocishah Sûryavarcasah sâmanî dve oder Vasurocishah Pârâvateh oder Kâçîte dve (VGRBr. [VGCodex bei 18 Kâçîtam]), oder Kâpote oder Vasumande (VGRBr.) — âtharvanam (ArGRBr. u. ArGCod.)

Rv. ⁰ इय आपो भव⁰

14 = Rv. VI, 6, 6, 2 = VG. I, 2, 20 — 21 — **D.** Uçanas Kâvya (RvA. SvC.) — **G.** Agni — **M.** Gây. (RvA.) — **C.** Gor Ângirasasya sâmanî dve (VGRBr. und VGCod.), oder Gotamasya Manâjye (VGRBr.)

Rv. ⁰मि दूस्पते

I, 1, 1, 4, 1 = Sv. II, 1, 1, 20, 1 = Rv. IV, 8, 1, 1 = VG. I, 2, 22 — 23 — 24 — 25 = UG. I, 14 — XII, 2, 5 — XIII, 11 — XXI, 2, 20 — 21 — XXIV, 8 = UhyG. I, 2, 15 — V, 10 — **D.** Çamyu Bârhaspatya †) (RvA.), dagegen (nach SvC.) Bharadvâja — **G.** Agni — **M.** 1ste Hälfte eines Pragâtha (2te Hälfte Sv. II, 1, 1, 20, 2) (RvA.) — **C.** Bharadvâjasyopahavau dvau — Çraushtîgavam — Agner Vaiçvânarasya Yajñâyajñiyam oder Bharadvâjasya (VGRBr. [VGCod. bloss bei 25 yajñîyam]). (s. UttA.)

UhyG. I, 2, 15 hat सु ३ । शाः२सा २ ३ ४ गि षाम्। = सु शा२सिषम्न शा२सि⁰

2 = Sv. II, 7, 2, 4, 1 = Rv. VI, 4, 32 (15), 4 = VG. I, 2, 26 — 27 — 28 = UG. X, 2, 16 — 17 — 19 — **D.** Bharga Prâgâtha (RvA. SvC.) — **G.** Agni — **M.** 1ste Hälfte eines Pragâtha (2te Hälfte im UttA.). (RvA.) — **C.** (VGCod. bei 27 Nârmedham — VGRBr. fur alle 3 nur einen Namen Kârttaveçam). (s. UttA.)

Rv. पाह्युत.

3 = Rv. IV, 8, 2, 2 = VG. I, 2, 29 — 30 — **D.** (nach RvA.) Çamyu u. s. w. (zu Vs 1); aber (nach SvC.) Trinapâni (vgl. die Note zu Vs 1) — **G.** Agni (RvA.) — **M.** Brhatî. [Im Rv. ist V. L. und der Vers die erste Hälfte eines Mahâbârhata Pragâtha] — **C.** Bharadvâjasya Prçninî dve (VGRBr.)

Rv. ⁰दिदिह्रि द्युमत्पावक दीदिहि.

4 = Rv. V, 2, 22, 1 = VG. I, 2, 31 — **D.** Vasishtha (RvA. SvC.) — **G.** Agni — **M.** 1ste Hälfte e. Pragâtha (RvA.) — **C.** Uror Ângirasasya sâma (VGRBr.)

Rv. (und B.) ऊर्जा द⁰ ( ‿ für नु).

5 = Rv. VI, 4, 35 (17), 4 = VG. I, 2, 32 — 33 — **D.** (nach RvA.) Bharga Prâgâtha, aber (nach SvC.) Bharadvâja — **G.** Agni — **M.** 1ste Hälfte e. Pragâtha (RvA.) — **C.** Gotamasya Paurumahne dve (VGRBr. [VGCod. bloss Paurumahnam] oder Purumahnasyângirasasya (VGRBr.)

Rv. तेपानो und गृहपतिम⁰

6 = Sv. II, 9, 1 6, 1 = Rv. I, 3, 28, 1 = VG. I, 2, 34 — 35 = UG. XXI, 2, 17 — 18 — 19. UhyG. V, 4 — 6 — **D.** Praskanva Kânva (RvA. SvC.) — **G.** Agni u. Ushas — **M.** 1ste Hälfte eines Pragâtha (2te im UttA.) (RvA.) — **C.** Mandor Jâmadagnyasya sâmanî dve oder Mândave (VGRBr. — VGCod. bloss bei 35 Mândavam).

7 = Sv. II, 8, 1, 3, 1 = Rv. IV, 8, 2, 4 — VG. I, 2, 36 = UG. XII, 2, 6 — **D.** (nach RvA.) Çamyu u. s. w. (s. Vs 1), aber (nach SvC.) Trinapâni (s. Anm. zu Vs 1) — **G.** Agni — **M.** 1ste Hälfte e. Pragâtha (RvA.) — **C.** Bharadvâjasya Gâdham (VGRBr.) (s. UttA.)

8 = Rv. VI, 4, 31 (14), 5 = VG. II, 1, 1 — 2 — **D.** Bharga Prâgâtha (RvA. SvC.) — **G.** Agni — **M.** 1ste Hälfte e. Pragâtha (RvA.) — **C.** Gautame dve (VGR

†) Daneben Trinapânikam Prçnisûktam — vgl. SvC. zu Vs 3 und Rv. IV, 8, 4, 6 (letzter Vers des Hymnus)

सकृद्ध द्यौरजायत सकृद्भूमिरजायत । पृश्न्या दुग्धं सकृत्पयस्तदन्यो नानु जायते ॥ „einmal ist der Himmel gezeugt, einmal ist die Erde gezeugt; einmal ist der Priçni Milch gemelkt; ein andrer wird in Zukunft nicht gezeugt." Dann folgt im Chamb. mscpt. nr. 70 | khila | सूक्तानि तृणान्यग्नावरण्ये वोदके ऽ पि वा । यस्तृणैरध्ययनं तदधीतं स्तृणानि*) भवते भव । वापो कूपतडागानां समुद्रं गच्छ स्वाहा॥ Dieser Zusatz findet sich weder in Pada noch Anukr. noch Commentar. Hr. Dr. Roth hat in einem Mscpt gefunden. यस्तृणैरध्ययनं सृणानि भवते भव । समुद्रं गच्छ स्वाहा welches nur eine Verstümmelung von jenem ist. Die 3 Sätze klingen wie Verse; doch ist mir kein dreitheiliger Vers dieses Schemas vorgekommen. Was sie bedeuten lässt sich wohl errathen, doch nicht mit hinlänglicher Sicherheit.

*) Cod. स्तृणानि.

Br. [VGCod. bei 1 ubhayastobhaṅ Gautamam]).

Rv. ऋतस्कवि:

9 = Rv. VI, 4, 33 (16), 1 = VG. II, 1, 3 — **D. G. M.** wie im vorig. — **C.** Agner âyuḥ (VGRBr.)

Rv. स्वयज्ञ°

10 = Sv. II, 7, 3, 5, 1 = Rv. VI, 7, 14, 1 = VG. II, 1, 4 — 5 — 6 — 7 = UG. XI, 2, 5. — **D.** (nach RvA.) Sobhari Kâṇva (SvC. schreibt Saubhari und im Genit. Saubhares s. Gloss. unter Sobhari) — **G.** Agni — **M.** 1ste Hälfte e. Pragâtha (die 2te im UttA.). (RvA.) — **C.** Agner harasî dve (VGRBr.) und Dairghaçravase dve (VGRBr. und VGCod.) (s. UttA.)

Rv. यंत्वागृ°

I, 1, 1, 5, 1 = Sv. II, 1, 2, 13, 1 = Rv. V, 2, 21, 1 = Yv. XV, 32 = VG. II, 1, 8 — 9 — 10 — 11 = UG. XXI, 2, 8 — 11 — 14 = UhyG. I, 2 — V, 1. — **D.** Vasishtha (RvA. SvC.) — **G.** Agni — **M.** 1ste Hälfte eines Pragâtha (2te im UttA.) (RvA.) — **C.** Agner âgneye dve und Gotamasya Manâjye dve (VGRBr.) — (s. UttA.)

2 = Rv. VI, 4, 34 (16), 5 = VG. II, 1, 12. — **D.** Bharga Prâgâtha (RvA. SvC.) — **G.** Agni — **M.** erste Hälfte e. Pragâtha (RvA.) — **C.** Daivarâjam (VGRBr.)

Rv. मात्रा: und हव्या.

3 = Sv. II, 7, 1, 11, 1 = Rv. VI, 7, 13, 1 = VG. II, 1, 13 = UG. X, 2, 13 — XI, 2, 4 — XXIII, 3, 2 — **D.** Sobhari (RvA., aber Saubhari SvC.) Kâṇva — **G.** Agni — **M.** Bṛhatî (RvA.) — **C.** Gâthinah Kauçikasya sâma (VGRBr.) (s. UttA.)

Rv. नक्तं.

4 = Rv. VI, 2, 31, 1 = VG. II, 1, 14 — 15 — **D.** Manu Vaivasvata (RvA. SvC.) — **G.** Viçve Devâḥ — **M.** 1ste Hälfte e. Pragâtha (RvA.) — **C.** Bârhadukthe dve (VGRBr.)

Rv. मरुतो ब्रह्मणस्पतिं देवाँ.

5 = Rv. VI, 5, 13, 4 = VG. II, 1, 16 — **D.** Suditi und Purumîlha, Angirasiden oder einer von beiden (RvA.), SvC. hat Sudîteḥ Purumîḍhasya ohne ca und bei Stevens. ist nur Purumîḍha genannt — **G.** Agni — **M.** 1ste Hälfte e. Pragâtha (RvA.) — **C.** Paurumîḍham (VGRBr.)

Rv. und B. इळिषाव° (Rv. auch पुरुमीळ्ह) Rv. u. B. गिं सु°

6 = Rv. I, 3, 30, 3 = VG. II, 1, 17 — **D.** Praskanva Kâṇva (RvA. SvC.) — **G.** Agni — **M.** 1ste Hälfte e. Pragâtha (RvA.) — **C.** Karṇaçravasam oder Prâskaṇvam (VGRBr.)

Rv. सीदंतु und प्रातर्यावाणा°

7 = Sv. II, 7, 1, 11, 3 = Rv. VI, 7, 13, 2 = VG. II, 1, 18 = UG. X, 2, 13 — XI, 2, 4 — XXIII, 3, 2 — **D.** Sobhari (RvA. — Saubhari, SvC.) Kâṇva — **G.** Agni — **M.** Bṛhatî (RvA.) — **C.** Daivodâsam (VGRBr.) (s. UttA.)

Rv. देवाँ अछ न° und नाकस्य मानवि.

8 = Rv. V, 7, 13, 3 = VG. II, 1, 19 — **D.** Medhâtithi und Medhyâtithi Kanviden (RvA.), aber SvC. entweder bloss Medhâtithi (wie auch Stev.) oder bloss Medhyâtithi (was sich in der von mir benutzten Hdschr. nicht unterscheiden liess) — **G.** Agni — **M.** Bṛhatî (RvA.) — **C.** Saukratavam (VGRBr.)

9 = Rv. III, 1, 5, 2 = VG. II, 1, 20 — 21 = ArG. II, 2, 13 — 14 — VI, 4 — **D.** Viçvâmitra S. d. Gâthin (RvA. SvC.) — **G.** Agni — **M.** Bṛhatî — **C.** Kânve dve (VGRBr.) — Yâme dve (ArGRBr. u. ArGCod.) u. Mahâvaiçvânaravratam (ArG. ebenso.)

Rv. इहाभव: (ebenso Nir. IV, 13.)

10 = Rv. I, 3, 11, 4 = VG. II, 1, 22 — 23 — **D.** Kaṇva Ghaura (RvA.), aber (nach SvC.) Praskaṇva — **G.** Agni — **M.** 1ste Hälfte e. Pragâtha (RvA.) — **C.** Mânave dve (VGRBr. u. VGCodd.)

I, 1, 2, 1, 1 = Sv. II, 7, 1, 10, 1 = Rv. V, 2, 22, 4 = VG. II, 1, 24 = UG. X, 2, 12 — XXIII, 7 — **D.** Vasishṭha (RvA. SvC.) — **G.** Agni — **M.** 1ste Hälfte e. Pragâtha (die 2te im UttA.) (RvA.) — **C.** Agner Draviṇam (VGRBr.) (s. UttA.)

Rv. विवद्वयासि° (ebenso Pâṇ. II, 4, 76 — VII, 4, 78 —). Die Discrepanz wird SvC. hier und zu II, 7, 1, 10, 1 bemerkt.

2 = Rv. I, 3, 20, 3 = VG. II, 1, 25 — **D.** Kaṇva Ghaura (RvA. SvC.) — **G.** Brahmaṇaspati — **M.** 1ste Hälfte e. Pragâtha (RvA.) — **C.** Agner Bârhaspatyam (VGRBr.)

3 = Rv. I, 3, 10, 3 = Yv. XI, 42 = VG. II, 1, 26 — **D.** wie im vor. — **G.** Agni (Yaupya) — **M.** 1ste Hälfte e. Pragâtha (RvA.) — **C.** Vasishṭhasya vînkam (VGRBr).

4 = Rv. VI, 7, 13, 4 = VG. II, 1, 27 **D.** Sobhari (RvA. — Saubhari SvC.) Kâṇva — **G.** Agni — **M.** Bṛhatî (RvA.) — **C.** Vishyardhasa âṅgirasasya sâma (VGRBr).

Rv. यं राये निनीषसि.

5 = Rv. I, 3, 8, 1 = VG. II, 1, 28 — **D.** Kaṇva Ghaura (RvA. SvC.) — **G.** Agni

— **M.** 1ste Hälfte e. Pragâtha (RvA.) — **C.** Etavâdhryam (VGRBr).

Rv. वचोभिरिमिह यं सोमिदन्य ईलते.

6 = Rv. III, 1, 16, 1 = VG. II, 1, 29 — **D.** Atkîla Kâtya (RvA. u. SvC.) — **G.** Agni — **M.** 1ste Hälfte e. Pragâtha (RvA.) — **C.** Manaso dohah (VGRBr).

Rv. ⁰स्येश मह: सो⁰

7 = Rv. V, 2, 21, 5 = VG. II, 1, 30 — 31 — 32 — **D.** Vasishtha (RvA. SvC.) **G.** Agni — **M.** 1ste Hälfte e. Pragâtha (RvA.) — **C.** Samantâni trîni, Agner ekam oder Vasishthasya, und Varunasya dve (VGRBr. [VGCod. nur bei 30 Samantam].)

Rv. u. B. यन्ति वेषि च

8 = Rv. III, 1 5, 1 = VG. II, 1, 33 — **D.** Viçvâmitra S. d. Gâthin (RvA. SvC.) — **G.** Agni — **M.** Bṛhatî (RvA.) — **C.** Vâmrasya Vaikhânasasya sâma oder Anjîgasya Dânavasya (VGRBr).

Rv. सुभगं सुदीदितिं.

I, 1, 2, 2, 1 = VG. II, 1, 34 — **D.** Vâmadeva (SvC.) — **G.**? — **M.** Trishtubh — **C.** Çyâvâçvam (VGRBr).

2 = Rv. VIII, 6, 18, 1 = VG. II, 1, 35 — 36 — **D.** Upastuta Vârshtahavya (RvA. SvC.) — **G.** Agni — **M.** Jagatî (RvA.) — **C.** ṛtushâmanî (VGRBr).

Rv. ⁰रावयेति⁰ und यद्दि तोशंनुदर्थ च नु वृवत्तं स⁰ und इत्यं च⁰

3 = Rv. VIII, 1, 18, 1 = VG. II, 1, 37 — **D.** Bṛhaduktha Vâmadevya (RvA. SvC.) — **G.** Viçve Devâh — **M.** Trishtubh (RvA.) — **C.** Yâmam (VGRBr).

Rv. संविशंन तन्वा आ⁰ (B. nach Stev. तनुव ३)

4 = Sv. II, 4, 1, 7, 1 = Rv. I, 6, 30, 1 = VG. II, 1, 38 = UG. XVII, 15 — **D.** Kutsa Ângirasa (RvA. SvC.) — **G.** Agni — **M.** Jagatî (RvA.) — **C.** Agner ârsheyam oder Yajñasârathi (VGRBr. [VGCod. bloss Yajñasârathi].) (s. UttA.)

5 = Sv. II, 4, 2, 5, 1 = Rv. IV, 5, 9, 1 = Yv. VII, 24 = VG. II, 1, 39 — 40 = ArG. I, 2, 16 = UhyG. II, 2, 2 — **D.** Bharadvâja Bârhaspatya (RvA. SvC.) — **G.** Vaiçvânara — **M.** Trishtubh (RvA.) — **C.** Agner Vaiçvânarasya sâmanî dve (VGRBr.) — Agner Vaiçvânarasyâjyadoham (ArGRBr. [ArGCod. bloss âjyadoham].) (s. UttA.)

Rv. u. B. आसना पा⁰

6 = Rv. IV, 6, 18, 1 = VG. II, 2, 1 — 2 — **D.** wie im vor. — **G.** Indra (vgl. jedoch die Discrepanz, wonach es im SvC. wohl Agneyam) — **M.** Trishtubh (RvA.) — **C.** Âçve dve oder Etate (VGRBr).

Rv. उक्थेभिरिंद्रानयंत यज्ञे: । तं त्वाभि: सुष्टुतिभिर्वाजयंत आजिं न जग्मुर्गिर्वाहो अश्वा:

7 = Rv. III, 4, 20, 1 = VG. II, 2, 3 — **D.** Vâmadeva Gautama (RvA. SvC.) — **G.** Rudra — **M.** Trishtubh (RvA.) — **C.** Vâmadevyam oder Raudram (VGRBr).

8 = Rv. V, 2, 11, 1 = VG. II, 2, 4 — 5 — **D.** Vasishtha (RvA. SvC.) — **G.** Vaiçvânara — **M.** Trishtubh (RvA.) — **C.** Vaiçvajyotishe dve (VGRBr).

Rv. u. B. ईलते अग्र उप⁰ (अग्रे)

9 = Rv. VII, 6, 3, 1 = VG. II, 2, 6 — 7 — **D.** Triçiras Tvâshtra (RvA. — SvC. Tvashtṛ Triçiras) — **G.** Agni — **M.** Trishtubh (RvA.) — **C.** Yâme dve (VGRBr.)

Rv. अंता und उपमां आनद्रप⁰

10 = Sv. II, 6, 1, 10, 1 = Rv. V, 1, 23, 1 = VG. II, 2, 8 — 9 — = UG. VI, 22 — XVI, 2, 10 — XXIII, 11 — **D.** Vasishtha (RvA. SvC.) — **G.** Agni — **M.** Virâj (RvA.) — **C.** Indrasya Vairâje dve oder Vasishthasya, oder râçimarâye oder marâyarâçine (so! ob ⁰ nî), oder sphâlimkarane, oder cyâvane, oder çaikhandine oder invake (VGRBr. [VG. Cod. bei 9 marâyam]). (s. UttA.)

Rv. u. B. हस्तच्युती Rv. जनयंत (diese Discrepanzen sind von SvC. zu II, 6, 1, 10, 1 bemerkt) — Rv. u. B. अथर्युम् (Nir. V, 10 hat nur die Lesearten des Rv.)

I, 1, 2, 3, 1 = Sv. II, 8, 3, 13, 1 = Rv. III, 8, 12, 1 = VG. II, 2, 10 = UG. XIX, 8 — **D.** Budha und Gavishthira Atriden (RvA. SvC.) — **G.** Agni — **M.** Trishtubh (RvA.) — **C.** Çyenâçvaçyainam oder çyaitam oder çayanam oder çâyanam oder Prajâpater dîrghâyushyam (VGRBr.)

Rv. u. B. सिमते.

2 = Rv. VIII, 1, 1, 5 = VG. II, 2, 11 — **D.** Vatsapri Bhâlandana (RvA. SvC.) — **G.** Agni — **M.** Trishtubh (RvA.) — **C.** Çukram (VGRBr.)

Rv. u. B. मूरा अमूर.

Rv. नयंतो गर्भं वना धियं धुर्हिरिश्मश्रुं नार्वाणं धनर्चम् ।

3 = Rv. IV, 8, 24, 1 = VG. II, 2, 12 — **D.** Bharadvâja Bârhaspatya (RvA. SvC.) — **G.** Pûshan — **M.** Trishtubh — **C.** Paushnam (VGRBr.)

Rv. स्वधावो

4 = Rv. II, 8, 16, 3 = Rv. III, 1, 2,

6 = Yv. XII, 51 = VG. II, 2, 13 — **D.** Viçvâmitra S. d. Gâthin (RvA. SvC.) — **G.** Agni — **M.** Trishṭubh (RvA.) — **C.** Kautsam (VGRBr.)

5 = Rv. VIII, 1, 1, 1 = VG. II, 2, 14 — 15 — **D** Vatsapri Bhâlandana (RvA. SvC.) — **G.** Agni — **M.** Trishṭubh — **C.** Kâçyape dve (VGRBr.)

Rv. नृषद्वा Rv. und B. अपामुपस्थे

Rv. दधिर्यो धायि स ते वया०

6 = Rv. V, 2, 9, 1 = VG. II, 2. 16 **D.** Vasishṭha (RvA. SvC.) — **G.** Vaiçvânara — **M.** Trishṭubh — **C.** Ghṛtâcer ângirasasya sâma (VGRBR.)

Rv. समृतो; Rv. und B. प्रशस्तिं Rv.

वन्दे दारुं वन्दमानो विवक्मि (B.

दारुं (nach Stev.) kann ebensowohl Corruption von दारुं (Rv.) als दारुं (Sv.) sein; der Accent würde entscheiden).

7 = Rv. III, 1, 32, 2 — Kâṭhaka Upan. I, 1, 4 = VG. II, 2, 17 — **D.** Devaçravas und Devavâta Bharatiden (nach RvA.), aber Viçvâmitra (nach SvC.) — **G.** Agni — **M.** Trishṭubh (RvA.) — **C.** Bharadvâjasya prâsam (VGRBr).

Rv. सुधितो गर्भिणीषु.

8 = Rv. VIII, 4, 8, 4 = VG. II, 2, 18 — **D.** Pâyu Bhâradvâja (RvA. SvC. ist wohl eben so zu lesen; der von mir benutzte Cod. hat द्रयोरार्षे, Stev. schreibt Saya) — **G.** Agni (Râkshoghnam) — **M.** Trishṭubh (RvA.) — **C.** Agner Vaiçvânarasya Râkshoghnam, oder Atreḥ (VGRBr).

Rv. u. B. क्रव्यादो मा०

I, 1, 2, 4, 1 = Rv. IV, 1, 2, 1 = VG. II, 2, 19 — 20 — **D.** Gaya âtreya (RvA. SvC.) — **G.** Agni — **M.** Anushṭubh (RvA.) — **C.** Pâthe (VGRBr).

Rv. राया परीणसा B. ebenfalls राया.

2 = VG. II, 2, 21 — **D.** Vâmadeva (SvC.) — **G.**? — **M.** Anushṭubh — **C.** Bṛhad âgneyam (VGRBr).

3 = Rv. IV, 5, 2, 1 = VG. II, 2, 22 — **D.** Bharadvâja Bârhaspatya (RvA. SvC.) — **G.** Agni — **M.** Anushṭubh (RvA.) — **C.** Gâram (VGRBr).

Rv. दिवि षं क्षु०

4 = Rv. IV, 5, 1, 1 = VG. II, 2, 23 — **D. G. M.** wie im vorigen. — **C.** Bṛhad âgneyam (VGRBr).

5 = Rv. IV, 1, 10, 1 = VG. II, 2, 24 **D.** Dvita Mṛktavâhas âtreya (RvA. — ebenso wohl auch SvC.; denn Stev. nennt Dvaita; in M. M. ist hier eine Lücke) — **G.** Agni — **M.** Anushṭubh (RvA.) — **C.** Bṛhataḥ Kaumudasya sâma (VGRBr).

Rv. hat als 2te Hälfte. विश्वानि यो अमर्त्यो हव्या मर्तेषु रण्यति ।

6 = Rv. IV, 1, 18, 2 = VG. II, 2, 25 — 26 — **D.** Vasûyava âtreya (RvA. SvC. nach Stev. — M. M., wie im vor.) — **G.** Agni — **M.** Anushṭubh (RvA.) — **C.** Agner yadvâhishṭhîye dve (VGRBr. [VGCod. bloss bei 26 yadvâhishṭhîyam].)

7 = Sv. II, 7, 2, 12, 1 = Rv. VI, 5, 21, 1 = VG. II, 2, 27 = UG. XI, 8 - 9 — 10 — XV, 2 — XVIII, 1 — **D.** Gopavana âtreya (RvA. SvC. wie im vor.), — oder Saptavadhri âtreya (RvA.) — **G.** Agni (ârkshasya Çrutarvaṇo dânastutiḥ) — **M.** Anushṭubh (die 2 im UttA. folgenden sind Gây) (RvA.) — **C.** Agner viçoviçîyam (VGRBr. und VGCod.) oder Aindram Çârgam (VGRBr). (s. UttA.)

8 = Rv. IV, 1, 8, 1 = VG. II, 2, 28 — 29 — **D.** Pûru âtreya (RvA. SvC.) — **G.** Agni — **M.** Anushṭubh (RvA.) — **C.** Prajâpateḥ kanînike dve oder Atreḥ (VGRBr. VGCod. âtreye).

Rv. प्रशस्तिभिर्म०

9 = Rv. VI, 5, 21, 4 = VG. II, 2, 30 — **D. G. M.** wie bei Vs 7, nur dass M. M. wie Stev. Gopavana nennt — **C.** Çrautarvaṇam (VGRBr).

Rv. आगन्म Rv. u B. यस्य श्रु० Rv. श्रुतर्वा बृहन्नार्क्ष अनीक एधते

10 = VG. II, 2, 31 — **D.** Vâmadeva (SvC.) — **G.**? — **M.** Anushṭubh — **C.** Kaçyapasya Svayoni oder Indrasya Indriyam oder Indrasya priyam (VGRBr).

I, 1, 2, 5, 1 = Rv. VIII, 7, 29, 3 = Yv. IX, 26 = VG. III, 1, 1 — **D.** Agni Tâpasa (RvA.), aber Vâmadeva (nach SvC.) — **G.** Viçve Devâḥ — **M.** Anushṭubh (RvA.) — **C.** Bârhaspatyam.

Rv. und Yv. रायानमवसे अग्निं गीर्भिर्हव० आदित्यान्वि० Yv. elidirt das अ in अग्निं. — आदित्यान् auch B.

2 = VG. III, 1, 2 — **D.** Vâmadeva (nach Stev. — Lücke in M. M.) — **G.**? — **M.** Anushṭubh — **C.** ârûḍhavad âṅgirasam (VGRBr).

3 = VG. III, 1, 3 — 4 — **D. G. M.** wie im vor. — **C.** âsite dve (VGRBr. u. VGCod.)

